# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]





५२ वर्षे
३-४ अङ्कौ

मार्गशीर्ष-फाल्गुनपूर्णिमे
दिसम्बर - मार्च, १९९७-९८


CC-0. Sampurnanand University Collection. Digitized by eGangotri

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

सम्पादकः
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, प्रकाशनसंस्थानस्य




५२ वर्षे
३-४ अङ्कौ

वार्षिकं मूल्यम् - १०० रूप्यकाणि
दिसम्बर - मार्च, १९९७-९८ ई.

CC-0. Sampurnanand University Collection. Digitized by eGangotri

## परामर्शदातृसम्पादकमण्डलम्


**प्रो. राममूर्तिशर्मा**, कुलपतिः, अध्यक्षः

१. **डॉ. उमाशङ्करशुक्लः**,
वेदवेदाङ्गसङ्कायाध्यक्षः

२. **डॉ. वशिष्ठत्रिपाठी**,
दर्शनसङ्कायाध्यक्षः

३. **डॉ. गङ्गाधरपण्डा**,
साहित्य-संस्कृति-सङ्कायाध्यक्षः

४. **डॉ. ब्रह्मदेवनारायणशर्मा**,
श्रमणविद्या-सङ्कायाध्यक्षः

५. **डॉ. सत्यव्रतशर्मा**,
आधुनिक-ज्ञान-विज्ञान-सङ्कायाध्यक्षः

६. **डॉ. हरिश्चन्द्रमणित्रिपाठी**,
संयोजकः





*प्रकाशकः —*

**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, प्रकाशनसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

*मुद्रकः —*

**श्रीजी-कम्प्यूटर प्रिण्टर्स**
नाटी इमली
वाराणसी - २२१००१

*प्राप्तिस्थानम्—*

**विक्रय-विभागः**, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१००२


CC-0. Sampurnanand University Collection. Digitized by eGangotri

# विषयानुक्रमणी



●

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# सारस्वती सुषमा
## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ५२ वर्षे | मार्गशीर्ष-फाल्गुनपूर्णिमे, वि.सं. २०५४ | ३-४ अङ्कौ |
|---|---|---|

# निर्विशेषब्रह्मवादः

**प्रो. पारसनाथद्विवेदी**
आचार्योऽध्यक्षश्च, वेदान्तविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी



क्रोडस्थितभूतिसितेन शम्भुना
उदीयमानार्क इवारुणच्छविः ।
हिमालयस्य द्युतिमाभिहारयन्
गजाननश्शं तनुतादहर्निशम् ।।

इदमत्र मीमांस्यते—'सर्वकामः सर्वकर्मा सर्वगन्धः' (छा॰ ३।१४।२) इत्याद्याः श्रुतयः सविशेषब्रह्मबोधिकाः। 'अस्थूलमनणु.......' इत्याद्याश्च निर्विशेष-ब्रह्मलिङ्गकाः श्रुतय इति तत् किमत्र प्रतिपत्तव्यम् । अन्यतरदुभयविधमेकं वेति। अत्रोच्यते—निर्विशेषमेव श्रुत्या बोध्यते, एकस्योभयलिङ्गविरोधात्।

उक्तञ्चोभयलिङ्गाधिकरणे—'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' (३।२।११) इति सूत्रे भगवत्पादैः। तत्रत्याधिकरणस्यायं भावः—नोभयलिङ्गत्वं ब्रह्मणः स्वाभाविकम्, सविशेषनिर्विशेषत्वयोर्विरोधात् । तथा चैकं स्वतोऽपरं परत इति स्वीकार्यम् । परतश्च सविशेषत्वं स्वतस्तु निर्विशेषत्वमिति। अत एवोक्तम्—न स्थानतोऽपीति। स्थानमुपाधिस्ततोऽपि ब्रह्मण्यन्यादृशता न सम्भवति स्वाभाविकी। न हि स्वच्छस्फटिको जपाकुसुमसंयोगाद् वस्तुतो रक्तो भवति। अत उपाधिनापि न वास्तवो विशेषो भवितुमर्हति। स्थानतोऽपीत्यत्रापिना स्वतोऽ-

CC-0. Sampurnanand University Collection. Digitized by eGangotri

पीत्यर्थः। न च स्वतः सविशेषं, न चोपाधितोऽपीति भावः। अतो ब्रह्मणि विशेषः कल्पितोपाधिकल्पित एव न वस्तुत इति स्फटिकलौहित्यवद् आरोपित इति तात्पर्यम्। उपाधितो वास्तवविशेषसत्त्वे परिणामित्वाद् ब्रह्मणोऽनित्यत्वापत्तिः। एवञ्चाज्ञानोपाधितः सर्वकर्मगन्धरसादित्वं ब्रह्मण्यध्यारोपितमेव श्रुतियुक्तिभ्यामास्थेयम्। निर्विशेषत्वप्रतिपादनार्थत्वात् श्रुतीनाम्।

एवञ्च सविशेषप्रतिपादकश्रुतीनामपि निर्विशेषत्वप्रतिपादन एव तात्पर्यम्, न स्वार्थे प्रामाण्यम्। ततश्चान्यतरलिङ्गपरिग्रहेऽपि समस्तविशेषरहितं निर्विकल्पकमेव ब्रह्म प्रतिपत्तव्यम्, न सविशेषम्। सर्वत्र हि ब्रह्मस्वरूपप्रतिपादनपरेषु वाक्येषु 'अशब्दमस्पर्शमरूपमव्ययम्' (कठो॰ ३।१५) इत्यादिष्वपास्तसमस्तविशेषमेव ब्रह्मोपदिश्यते।

न च ब्रह्मणो विभिन्नाकारोपदेशात् सविशेषत्वमप्यङ्गीकर्त्तव्यम्। तथा हि चतुष्पादषोडशकलं ब्रह्म वामनीत्वादिलक्षणं ब्रह्म त्रैलोक्यशरीरवैश्वानरशब्दोदितं ब्रह्म इत्यादिरूपेण भेदनिर्देशादिति वाच्यम्, वास्तविकभेदस्यासत्त्वाद् उपाधिकृतभेदस्य सत्त्वे चेष्टापत्तेः। वास्तविकभेदसत्त्वे च एकमेवाद्वितीयमित्यादिश्रुतिविरोधः। औपाधिके च उपास्योपासकत्वसिद्धये भेदे सति सर्वसामञ्जस्याद् न ह्यौपाधिकेन भेदेन वस्तु भिद्यते।

किञ्च प्रत्युपाधिभेदमभेद एव श्रुत्या बोध्यते। 'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शरीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव योऽयमात्मा' (बृ. २।५।१)। अतो न श्रुतेर्ब्रह्मणो भेदे तात्पर्यं भेदस्योपासनार्थं कल्पनात्।

किञ्च भेदनिन्दाऽपि श्रुत्या क्रियते—'मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (बृ. ४।१।१)। भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तम्, त्रिविधं ब्रह्म एतद् इत्यादिना शास्त्रीयेण वाक्येन अभिन्नमद्वैतं निर्विकल्पं निर्विशेषं ब्रह्मैव बोध्यते, न सविशेषमिति। अत एव अरूपवदेव तत्प्रधानत्वादिति सूत्रेणापि रूपाद्याकाररहितस्यैव ब्रह्मणोऽवधारयितव्यत्वं प्रतिपाद्यते। रूपादिविशेषरहितस्यैव तस्य श्रुतिशतैर्बोधनात्। तथा हि — 'अस्थूलमनण्वह्रस्वमदीर्घम्' (बृ.३।८।८), 'अशब्दमस्पर्शमरूपमव्ययम्' (क॰३।१५), 'आकाशो वै नामक-पयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' (छा॰ ८।१४।१), 'दिव्यो ह्यमूर्तिः पुरुषः स बाह्याभ्यन्तरो ह्यजः' (मु॰२।१।२) 'तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः, (बृ. २।५।१९) इत्यादीनि वाक्यानि प्राधान्येन निराकारस्य निर्विशेषस्यैवात्मन उपदिशन्ति। अत इतराणि

CC-0. Sampurnanand University Collection. Digitized by eGangotri

आकारवद्विषयाणि वाक्यानि न प्रधानानि स्वरूपबोधकानि, अपि तूपासना-विधिप्रधानानि। तैरुपासनाविधिर्बोध्यते न ब्रह्मस्वरूपम्। निर्विशेषस्य चोपास्यत्वेन विधातुमशक्यत्वाद् विशेषं परिकल्प्योपासना विधीयते। प्रधानवाक्यानामेव बलीयस्त्वात् तदर्थे एव श्रुतेः परमतात्पर्यमवधारयितव्यम्। सर्वविशेष-बोधकश्रुतीनाञ्च 'प्रकाशवच्चावैयर्थ्यम्' इति सूत्रेण पृथिव्याद्युपाधिसम्बन्धात् तदाकारताबोधनद्वारा उपास्यत्वोपदेशकरणाद् अवैयर्थ्यं प्रतिपादितम्।

सर्वथा च निर्विशेषमेकं ब्रह्म बोध्यते श्रुत्या। अत एव 'आह च तन्मात्रम्' इत्यग्रिमसूत्रेण चैतन्यमात्रं निर्विशेषं जगद्विलक्षणं ब्रह्म बोध्यते। तथा हि स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवेति। तथा चानया श्रुत्या आत्मनश्चैतन्यमात्रत्वं सिद्धं भवति।

एतदेव च पररूपप्रतिषेधेन निर्विशेषं ब्रह्म दर्शयति श्रुतिः 'अथात आदेशो नेति नेति' (बृ. २।३।६), 'अन्यदेव तद् विदितादवितादधि' (के॰३), 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' (तै॰२।४।१) इत्येवमाद्याः।

स्मृतिरप्याह—

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ।। इति।

श्रुतिस्मृतिभ्यां पररूपप्रतिषेधेन निर्विशेषत्वं बोध्यते। तत्र आदिरस्यास्तीति आदिमत् कार्यं न आदिमद् अनादिमत् कार्यरहितम्। अथवा न आदिर्यस्य अनादिः मत्तः परं =सगुणात् परमुत्कृष्टं निर्विशेषं ब्रह्म। सह इन्द्रियवेद्यमसत् परोक्षञ्च नास्तीत्यर्थः।

अत एव निर्विशेषत्वादेव सूर्यकादिवदुपमास्य युज्यते। तथा हि—

'एक एव तु भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्'।।

न च सूर्यादिभ्यो हि मूर्तेभ्यः पृथग्भूतं विप्रकृष्टदेशं मूर्तं जलं गृह्यते। तत्र युक्तः सूर्यप्रतिबिम्बः। न त्वात्मा मूर्तः, न चास्मात् पृथग्भूता विप्रकृष्टदेशाश्चोपाधय इति न युक्तदृष्टान्ततेति वाच्यम्, नीरूपस्याप्यात्मन उपाध्यन्तर्भावेण उपाधिगत-धर्मवत्त्वस्य विवक्षणात्। यथा हि सूर्यप्रतिबिम्बे जलगते जलगतवृद्धिह्रासभाक्त्वं तथैव प्रकृतेऽपीति बोध्यम्। तथा च परब्रह्मण उपाध्यन्तर्भावं श्रुतिरेव दर्शयति—

CC-0. Sampurnanand University Collection. Digitized by eGangotri

'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः स पक्षीभूत्वा पुरः पुरुष आविशत्' (बृ. २।५।१४)। 'अनेन जीवेनात्मनानुप्रविश्य' (छा॰६।३।५) तस्माद् युक्तो दृष्टान्तः।

तस्मात् सर्वासु सविशेषनिर्विशेषलिङ्गासु श्रुतिषु निर्विशेषमेव ब्रह्म प्रतिपाद्यते, न सविशेषं नोभयं न विपरीतमिति सिद्धम्। निरूपितश्चैतद् भगवत्पादैरुभयलिङ्गाधिकरणे 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इत्यादिसूत्रभाष्ये।

अविद्योपाधिमालम्ब्य सविशेषश्रुतिर्मता ।
अद्वैतं निर्गुणं ब्रह्म निर्विशेषश्रुतिर्गतिः ।।

निष्प्रपञ्चमद्वयं चैतन्यैकरसं ब्रह्म जिज्ञासितव्यम्। तदेव चाज्ञानोपाधिना जगत्कारणमिति श्रुतिलक्षणेन श्रुतिप्रमाणेन सूत्रभाष्यादिष्वसकृद् व्याख्यातम्।

तत्र वेदान्तैरध्यारोपापवादन्यायेन निर्विशेषमेव ब्रह्मावबोध्यते। अध्यारोपन्यायेन च समस्तसृष्टिस्थितिलयाश्रयतया जगत्कारणत्वेन ब्रह्म व्याख्यातम्, तच्च सविशेषमपवादन्यायेन च निष्प्रपञ्चमद्वैतं निषेधमुखेनावबोधितम्।

अनेनापवादन्यायेन ब्रह्मावबोधने सति प्रपञ्चस्य मिथ्यात्वं सिध्यति सविशेषस्याध्यारोपितविशेषकत्वमपारमार्थिकत्वं सिध्यति। तच्च निषेधवाक्यम्— 'अथात आदेशो नेति नेति। नेह नानास्ति किञ्चने'त्यादि। तथा हि बृहदारण्यके— 'द्वे वा ब्रह्मणो रूपे मूर्तञ्चैवामूर्तञ्च, मर्त्यश्चामर्त्यश्च स्थितञ्च यच्च सच्च त्यच्च' (बृ.२।३।१) इत्युक्तम्। तत्र पृथिव्यप्तेजोभूतत्रयं मूर्तं वाय्वाकाशद्वयममूर्तमिति पञ्चमहाभूतानां मूर्तामूर्तरूपेण द्वैराश्यमुक्तम् । एते द्वे रूपे परमार्थतोऽरूपस्य ब्रह्मणोऽध्यारोपिते। ताभ्यां तद् ब्रह्म रूप्यते। मूर्तस्य मूर्च्छितावयवस्य कठिनस्य विशेषणं मर्त्यं स्थितं सच्च। मर्त्यं मरणधर्मकं स्थितमव्यापकं सदन्येभ्यो विशिष्यमाणमसाधारणधर्मकम्। गन्धस्नेहोष्णता च परस्परव्यवच्छेदहेतवोऽसाधारणधर्माः। तस्यैतस्य मूर्तस्य रसः सारो य एष सविता तपति। अमूर्तञ्च कठिनं वायुरन्तरिक्षञ्च। एतदमृतमरणधर्मकमापेक्षिकम्, यद् व्यापकमित्यर्थः। एति गच्छतीति यत्। त्यद् नित्यपरोक्षमित्यर्थः। एतस्यामूर्तस्यामृतस्य यतस्त्यस्य रसः सारो यः सवितृमण्डले पुरुष इति। अधिदैवतं रूपम्। आध्यात्मिकञ्च शारीरारम्भकस्य मूर्तस्य भूतत्रयस्य रसश्चक्षुरमृतस्य प्राणस्यान्तराकाशस्य च तादृशस्य पूर्वोक्तविशेषणविशिष्टस्य रसो दक्षिणाक्षिस्थः पुरुष इति। तदेवं ब्रह्मण औपाधिकयोर्मूर्तामूर्तयोराध्यात्मिकाधिदैविकयोः कार्यकारणभावेन विभागो व्याख्यातः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तादृशस्य च कारणात्मनः पुरुषस्य रूपं मूर्तामूर्तवासनाविज्ञानमयं विचित्रं दृष्टान्तैरुच्यते। तद्यथा—'महारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपः' (बृ.२।३।६), महारजनं हरिद्रा तया रक्तं वस्त्रं महारजनं पाण्डु आविकं धवलं कम्बलमित्यविना।

एवञ्च ब्रह्मणि द्विराशिप्रविभक्तपञ्चमहाभूताध्यारोपमुक्त्वा श्रुत्यैव निषेध्यते—'अथात आदेशो नेति नेति' इति। निषेधशेषं ब्रह्म सत्यस्य सवासनस्योक्तपुरुषस्य सत्यमिति ज्ञायते। ननु को विषयः प्रतिषेधस्य। अन्यस्य निषेधसमर्पकस्य तदिमादिशब्दस्याभावाद् इतिशब्दस्यैव निषेधसमर्पकत्वम्। इतिशब्दश्च सन्निहितविषय एव शब्दवत्। सन्निहितश्चात्र प्रकरणात्। मूर्तामूर्तरूपद्वयं सप्रपञ्चं ब्रह्म च। तत्रेयं शङ्का जागर्ति—किं सवासनं पुरुषं हिरण्यगर्भाख्यं रूपद्वयञ्च सर्वं निषेध्यते उत ब्रह्मैव अथवा सवासनं रूपद्वयमेव ब्रह्म त्ववशिष्यत इति।

तत्र नेति नेति श्रुतिप्रयोगात् सवासनं रूपवद् ब्रह्म रूपद्वयञ्चापि निषिध्यते। अथवा रूपवद् ब्रह्मैव निषिध्यते। यद्यपि अस्तीत्येवोपलब्धव्य इति श्रुत्या ब्रह्मणो विभिन्नश्रुतिषु प्रतिपादितचरस्य असद्भावो न युक्तः, तथापि मूर्तामूर्तद्वयविशेष-निषेधात्, निर्विशेषं सामान्यं न भवतीति न्यायात् सामान्यस्य सद्रूपस्य ब्रह्मणोऽसद्भावो भवत्येव।

अस्तीत्येवेत्यादिश्रुतिस्त्वर्थवादत्वे न नेया। एवञ्च सर्वस्यैव निषेधो युक्त इति न निर्विशेषब्रह्मसिद्धिरिति चेत्, अत्रोच्यते—उभयप्रतिषेधे सति शून्य-वादप्रसङ्गात्। न हि भावमनाश्रित्य प्रतिषेध उपपद्यते। किञ्चिद्धि क्वचिन्निषिध्यते। कञ्चित्परमार्थमवलम्ब्यापरमार्थो निषिध्यते। यथा रज्ज्वां सर्पादयः। एवञ्च ब्रह्मणि अविद्योपस्थापितमूर्तामूर्तरूपप्रतिषेधे नैवानारोपिताधिष्ठानस्य प्रतिषेधो युक्तः सर्वप्रतिषेधे प्रतिषेधस्यैवानुपपत्तेः।

न च प्रत्यक्षादिप्रमाणोपपादितस्य मूर्तामूर्तप्रपञ्चस्य प्रतिषेद्धुमशक्यत्वात् सर्वजगद्व्याकोपाच्च ब्रह्मण एव प्रतिषेधयुक्त इति वाच्यम्।

'ब्रह्म ते ब्रह्मणि' (बृ. २।१।१) इत्युपक्रमविरोधाद् न ह्युपदेश-त्वेनापक्रान्तस्य निषेधो युक्तः। 'असन्नेव स भवति असद् ब्रह्मेति वेद चेत्' (तै॰२।६।१) इत्यादिनिन्दावचनात्। अस्तीत्येवोपलभ्य इति श्रुत्यवधारणात्। न चार्थवादत्वेन सत्यां गतौ सा श्रुतिर्नेया। यस्य च ब्रह्मणो वेदान्तेषु महता परिकरबन्धेन 'ब्रह्मविदाप्नोति परं सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिना वाक्येन प्रतिपादनं तस्यैव पुनरभावबोधने सर्ववेदान्तव्याकोपः प्रसज्येत। न च ब्रह्मण आत्मत्वाद् निषेधो भवितुमर्हति, निषेधकस्यापि आत्मरूपत्वात्। तस्माद् ब्रह्मणो

CC-0. Sampurnanand University Collection. Digitized by eGangotri

रूपं मूर्तामूर्तद्वयं प्रपञ्चं प्रतिषेधति श्रुतिः परिशिनष्टि च ब्रह्मेति निर्णेतव्यम्। एतदेव प्रकृतैतावत्त्वाधिकरणे— 'प्रकृतैवत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' (ब्र.सू. ३।२।२२), सूत्रे भाष्ये व्याख्यातं भामत्याञ्च।

प्रकृतं यद् एतावद् इयत्तापरिच्छिन्नं मूर्तामूर्तलक्षणं ब्रह्मणो रूपं तदेव शब्दः प्रतिषेधति। तद्धि प्रकृतं प्रपञ्चितञ्च पूर्वस्मिन् ग्रन्थेऽधिदैवतमाध्यात्मिकञ्चेति। एवञ्च सप्रपञ्चं ब्रह्मणो रूपं सन्निहितत्वाद् सन्निहितविषयबोधकेन इतिना सन्निधाप्यते, न वा प्रतिषेध्यत इति ब्रह्मणश्च प्रकृतत्वम्। 'द्वे वाव ब्रह्मणो रूपे' इत्यादौ षष्ठ्यन्तस्य तस्य विशेषणत्वाद् अप्रधानत्वाद् अप्रयुक्तत्वम्। न चार्थतः प्राधान्याद् ब्रह्मणो निषेधः, राज्ञो भृत्यो नास्तीत्यादिना राजनि निषेधप्रसङ्गात्। एवञ्च कल्पितरूपप्रत्याख्यानेन ब्रह्मणो निर्विशेषरूपावेदनं निर्णीयते। यत् प्रतिषिद्धं कार्यं तदास्पदमेव, अन्यत्र चासम्भवाद् मिथ्यात्वं तस्य निर्णीतं भवति। प्रपञ्चरूप-कार्यस्य च वाचारम्भणश्रुत्याप्यसत्त्वं प्रतिपाद्यते। न तु ब्रह्मणो नेति नेति श्रुत्या निर्विशेषं ब्रह्म बोध्यते तद्बोधन एव तात्पर्यम्।

न च स्वयं श्रुतिरूपद्वयं ब्रह्मण उक्त्वा स्वयमेव प्रतिषेधतीति न युक्तम्, प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायादिति वाच्यम्, मूर्तामूर्तत्वेन रूपद्वयवद् ब्रह्मेति प्रतिपादने श्रुतेस्तात्पर्याभावात्। लोकप्रसिद्धं रूपद्वयं यत् तत्कल्पितं सत्यं तु निर्विशेषं ब्रह्मैवेति प्रतिपादनपरत्वात्। तस्माद्रूपद्वयस्य प्रतिषेध्यसमर्पणार्थमनुवादमात्रं श्रुतिः करोतीति न दोषलेशोऽपि। तत्र नेति नेति द्वयो रूपयोः प्रतिषेधः किम्? अथवा प्रथमो भूतराशिं द्वितीयश्च वासनाराशिं प्रतिषेधति। अथवा वीप्सेयं यदुच्यते ब्रह्मातिरिक्तं तत्सर्वं न भवतीत्यर्थबोधाय। एवञ्च सत्यग्रेऽपि भूयो ब्रवीति श्रुतिः—'अन्यत् परमस्ति' इति सर्वप्रतिषेधे हि किमन्यत् परमस्तीति ब्रूयात्। ब्रह्मावसाने प्रतिषेधे च तत्रत्यः समस्त एव प्रघट्टकः सामञ्जस्यमेति, अनवसाने च सत्यस्य सत्यमित्यादिवाक्यं न सङ्गच्छते। अतो नेति नेत्यादिना प्रपञ्चस्यैव सर्वस्य प्रतिषेधो न ब्रह्मणः। निषेधे च सर्वप्रपञ्चे निर्विशेषं ब्रह्म सिध्यति।

एवमेव 'नेह नानास्ति किञ्चन' इति श्रुत्यापि ब्रह्मणि नानात्वं प्रतिषिध्यते। नानापदस्य ब्रह्मभिन्नमर्थः किञ्चिन्नित्यस्य च वस्तुसामान्यमर्थः। अस्तीत्यस्य अस्तित्वमर्थस्तथा चास्तित्वविशिष्टो ब्रह्मभिन्नवस्तुसामान्याभावो बोध्यते। अत्रापि च यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठत इति वाक्येन प्रसक्तं नानात्वं प्रतिषिध्यत इति।

●

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# पारस्करगृह्यसूत्रोक्ताशौचनिरूपणम्

**श्रीशिवराज-आचार्यः कौण्डिन्न्यायनः**
स्वाद्ध्यायशाला, च. २/४१९, सरस्वतीमार्गः
लाजिम्पाट्, काष्ठमण्डपमहानगरम्
नेपालदेशः



**विषयोपक्रमः**

अद्यत्वेऽपि भारतवर्षीयचातुर्वर्ण्यसमाजे प्रचलितस्य शास्त्रीयधर्मस्य विविधेषु पक्षेषु मध्य एकः पक्ष आशौचव्यवस्था वर्तते। एतस्मिन् विषये जनाः पण्डितान् समये समये प्रश्नान् पृच्छन्ति। पण्डिताश्च प्रायेण षडशीति-त्रिंशच्छ्लोकी-दशश्लोकी-निर्णयसिन्धु-धर्मसिन्धुप्रभृतीन् ग्रन्थान् विलोक्य तेषां प्रश्नानामुत्तराणि ददति। माध्यन्दिनीय-वाजसनेयि-शुक्लयजुर्वेदशाखाध्यायिकुलजा अपि पण्डिता माध्यन्दिनीय-वाजसनेयि-शुक्लयजुर्वेद-शाखाध्यायि-कुलजानां जनानामाशौचविषयकाणां प्रश्नानामुत्तरदानेऽपि एतस्मिन् विषये पारस्करगृह्यसूत्रे का व्यवस्था वर्तत इति विचार्य वक्तव्यमित्येतावदपि प्रायेण न जानन्ति। ते प्रायेण पारस्करगृह्यसूत्रप्रतिकूलां व्यवस्थामपि ददति। तस्मात् कारणाद् एतस्मिन् विषये पण्डितानां ध्यानाकर्षणस्य विचारस्य परिष्कारस्य चाऽऽवश्यकताऽनुभूयते। तस्मादत्र सङ्क्षेपेण तस्मिन् विषये सोपोद्घातो विचारः प्रस्तूयते।

वैदिक-सनातन-वर्णाश्रम-धर्मव्यवस्थायां सर्वासु धर्मव्यवस्थासु कर्तुर्गोत्र-प्रवर-वेदशाखा-सूत्राणां विचारो भवति। तस्माद् द्विजातिभिः स्वगोत्रप्रवरवेदशाखासूत्राणां व्यवस्थां सम्यग् ज्ञात्वा मुख्यरूपेण तदनुसारमेव धर्मकर्म कर्तव्यम्। अत एव वैदिका ब्राह्मणा अनादेरपौरुषेयस्य वेदस्य गुरुशिष्यपरम्परयाऽविच्छेदेन धारणं कृत्वा स्वशाखावेदादिशास्त्रनिचयस्य यथार्थस्य स्वरूपस्य रक्षां कर्तुं स्वशाखावेदादिशास्त्रस्यार्थं बोधयित्वा धर्ममोक्षपुरुषार्थसाधनं कर्तुं मार्गं दर्शयितुं च द्विजातिकुमाराणामुपनयनवेदाध्यापनादिकं कुर्वन्ति। तत्रापि संस्कारसम्पादन-

CC-0. Sampurnanand University Collection. Digitized by eGangotri

संस्कारपालन-शिखायज्ञोपवीतधारण-शौच-स्नान-सन्ध्योपासन-स्वाध्यायाध्ययन-तर्पणादिसदाचार-नियमपालन-परायणात्, लशुन-पलाण्डु-गृञ्जन-क्याकु-ग्राम्य-कुक्कुट-ग्राम्यसूकर-हट्टालयदालभक्ताऽशुचिस्पृष्टजललवणयुतपक्वान्नाद्यभक्ष्य-भक्षणपरिहारशीलात्, शीधु-मधु-मैरेयादिकमद्याद्यपेयपानवर्जकात्, निन्द्यसम्पर्क-परिहारशीलात् शास्त्रसम्मताधिकारसम्पन्नात्, शुद्धकुलीनाद् अनपाश्रित्यजीविनः स्वतन्त्रात् शास्त्रीयनियमानुसारविहित-गुरुमुखोच्चारणानूच्चारणरूपाध्ययन-गृहीतस्वशाखावेदमन्त्रादिकाद् गृहस्थाद् ब्राह्मणाद् गुरोः शास्त्रसम्मतेनाऽधिकारिणा यथानियमं 'वेदं समाप्य स्नायात्'[१] इत्यादिकं विधिमनुसृत्य श्रद्धयाऽधीतस्य महताऽऽदरेण पालितस्य स्वशाखावेदादिशास्त्रनिचयस्यैव धर्मे मोक्षे च मुख्यं प्रामाण्यमिति हि वैदिकानां शास्त्रप्रामाण्यसिद्धान्तः। अत एव वैदिके धर्मे स्वशाखाया वेदमन्त्रसंहिता, ब्राह्मणम् (आरण्यकोपनिषत्सहितम्), श्रौतसूत्रम्, गृह्यसूत्रम्, धर्मसूत्रम्, श्रौतगृह्यपरिशिष्टानि च मुख्यानि प्रमाणानि। अन्ये धर्ममीमांसाशास्त्र-ब्रह्ममीमांसाशास्त्राऽनुस्मृति-पुराणोपपुराणादिग्रन्थास्तु स्वशाखावेद-मन्त्रसंहितादीनामनुकूलत्वेऽविरोधित्वे चैव प्रमाणपदवीमारोहन्ति।

उक्तविधायां वैदिकानां शास्त्रप्रामाण्यवस्तुस्थितौ स्वाधीतस्वशाखा-वेदमन्त्रसंहितादिग्रन्था वैदिका विद्वांसो वेदवेदाङ्गोपाङ्गादिमूलग्रन्थेभ्य एव तत्तद्धर्मव्यवस्थाज्ञानं कृत्वा तदनुसारं तत्तद्धर्माचरणं कर्तुं शक्नुवन्ति; किन्तु तथाविधाध्ययनरहिताः साधारणाः पण्डितास्तथा कर्तुं प्रायेणाऽशक्ता भवन्ति। ते विभिन्नानां धर्मशास्त्रग्रन्थानां व्यवस्थासु भेदं विरोधमपूर्णतामस्पष्टतां च पश्यन्ति। ततश्चाऽऽवश्यकतत्तद्धर्माचरणे संशयेनाऽऽक्रान्ता भवन्ति। लोके एतादृशीं स्थितिं दृष्ट्वा प्राचीनाः केचन असहाय-भर्तृयज्ञ-विश्वरूप-भारुचि-श्रीकर-मेधातिथि-धारेश्वर-देवस्वामि-जितेन्द्रिय-बालक-बालरूप-योगिलोक-विज्ञानेश्वर-हलायुध-भवदेवभट्ट-गोविन्दराज-लक्ष्मीधरादयो विद्वांसः प्रायः सर्वेषां धर्मशास्त्रग्रन्थानां यथाशक्ति यथाज्ञानं विचारं कृत्वा अनुसरणीयं धर्ममार्गं स्पष्टं विधाय श्रद्धालूनामल्पज्ञानां जनानां धर्मानुष्ठाने साहाय्यं कर्तुं कस्यापि ग्रन्थविशेषस्य व्याख्यां स्वतन्त्रं धर्मशास्त्रनिबन्धं वाऽप्यररचन् किल। तदुक्तं श्रीधरेण—

श्रीकण्ठश्रीकराचार्यैः श्रुतिस्मृतिपुराणगैः।
स्मृतिशास्त्रेष्वनेकेषु विप्रकीर्णेष्वनेकधा ।।

---

१. पारस्करगृह्यसूत्रे २।६।१।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अनुष्ठात्रुपकारार्थं स्मृतिच्छिद्रं प्रयत्नतः।
पुराणन्यायमीमांसासाङ्गवेदैः प्रपूरितम्।।
कामधेनौ प्रदीपेऽब्धौ कल्पवृक्ष-लतासु च।
शम्भु-द्रविड-केदार-लोल्लटाद्यैश्च भाषितम्।।
मन्वाद्यनेकस्मृतिषु व्याख्यातृप्रतिपादितम्।
स्मृत्यर्थसारं वक्ष्यामि सुखानुष्ठानसिद्धये[१]।। इति।

यद्यपि धर्मशास्त्रव्याख्याकार-धर्मशास्त्रनिबन्धकाराणामुक्तविधमुद्देश्यं प्रशंसनीयमेव, तथापि इदानीमुपलभ्यमानग्रन्थकानां धर्मशास्त्रनिबन्धकाराणां समये प्रायो वेदानां वैधस्याऽध्ययनस्य वैदिकमुख्यवर्णाश्रमधर्माचरणस्य च शिथिलीभूतत्वेन तेषां ग्रन्थानां प्रणयने जातस्य मुख्यवैदिकपरम्पराया अनुसरणे शैथिल्यस्य तेभ्य एव ग्रन्थेभ्योऽवगम्यमानत्वात् तेषां ग्रन्थास्तादृशमुद्देश्यं प्राप्तुं विशेषेण सहायकास्तु न दृश्यन्ते।

भारतवर्षे खलु इतः पूर्वं प्रायः पञ्चसु सहस्रेषु वर्षेषु यदा कलियुगस्य प्रारम्भोऽभूत्, ततः प्रभृत्येव अर्थकामपराणां चार्वाकाणां चरित्रस्य प्रचारस्य वृद्ध्या बाहुल्याच्च वैदिकेऽध्ययने धर्माचरणे च शिथिलीभवति सति, सूर्यवंशजेक्ष्वाकुराजवंशे कलौ सुमित्रस्य राज्ञोऽन्तेऽस्तं गते[२], चन्द्रवंशज-पौरवराजवंशे च क्षेमकस्य राज्ञोऽन्तेऽस्तं प्राप्ते[३], ब्राह्मणसमाजेऽपि पतनोन्मुखे जाते वैष्णव-शैव-शाक्त-सौर-गाणपत्य-कौमारादिमतानां प्रचारस्य वृद्ध्या बार्हद्रथानां प्रद्योतवंशजानां शिशुनागवंशजनन्दानां च भारतवर्षीयाणां प्रमुखाणां राज्ञां समये वैदिकसनातनवर्णाश्रमधर्माचरणे क्रमेणाऽपचीयमाने सति, वैदिकधर्मस्य व्यापकत्वं गम्भीरत्वं चाऽबुद्ध्वा तस्य विरोधे उत्थितयो राजकुमारयोर्वर्धमानशाक्यसिंहयोरैकान्तिकधर्मयोः प्रचारेण क्षात्रधर्मे प्रशिथिले जाते, कौरुषाणां यवनानां च बाह्यानां भारतवर्षे आक्रमणाच्च वैदिक-धर्माचरणेऽतीवशिथिलीभूते विशेषतः शिशुनागवंशजस्य राज्ञो महानन्दिनः शूद्रायां भार्यायां जातस्य पुत्रस्य शासकस्य

---

१. स्मृत्यर्थसारे १८३४ तमे शकाब्दे पुण्यपत्तनस्थाऽऽनन्दाश्रममुद्रिते, पृ.१।

२. इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति।
यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ।। इति।
(विष्णुपुराणे-४।२२।१३, वायुपुराणे च-२।३७।२८८)।

३. ब्रह्मक्षत्रस्य यो योनिर्वंशो देवर्षिसत्कृतः।
क्षेमकं प्राप्य राजानं संस्थानं प्राप्स्यते कलौ।। इति।
(विष्णुपुराणे-४।२१।१८, वायुपुराणे-२।३७।२७४-२७५;
द्र. ब्रह्माण्डपुराणे च- ३।७४।२४४)।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

महापद्मस्य[१] समये-वैदिक-सनातनधर्माचरणे महति सङ्कटे समापतिते अलक्ष्यान्ध्रादीनां यवनानां भारतवर्षे आक्रमणे च जाते विष्णुगुप्तेन कौटल्येनाऽमर्षपूरितेन—

"येन शस्त्रं च शास्त्रं च नन्दराजगता च भूः।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम्"[२]।।

इति वदता शस्त्रशास्त्रविद्यापारदृश्वना द्विजोत्तमेन स्वशिष्यं मौर्यवंशजं चन्द्रगुप्तं युक्त्या राजानं कृत्वा वैदिकराष्ट्रे रक्षिते वैदिक-सनातन-वर्णाश्रमधर्मोद्धारे च कृतेऽपि[३] सति कालक्रमेण मौर्येष्वपि प्रमत्तेषु जैनेषु बौद्धेषु च समाजं प्रभावयत्सु सत्सु क्षत्रबन्धुषु च युद्धपराङ्मुखेषु जातेषु, आक्रामकेषु वाह्लीकयवनेषु देयमित्रमिलिन्दादिषु भारतवर्षं प्रविष्टेषु पतञ्जलिमुन्यादिसमर्थितेन शुङ्गवंशजेन द्विजोत्तमेन पुष्यमित्रेण सेनान्या मौर्यवंशजं बृहद्रथं स्वधर्मशिथिलं राजानं हत्त्वा स्वयं राज्यं प्रशास्य[४] बाह्यान् आक्रामकान् राष्ट्रान् निष्कास्य द्विरश्वमेधेनेष्ट्वा[५] वैदिकधर्मस्योत्थाने कृतेऽपि कालेनोत्थापितानां पातितानां च शुङ्गवंशजानां काण्ववंशजानाम् आन्ध्रवंशजानां गर्दभिलमालवगणमुख्यानां गुप्तवंशजानां च राज्ञां समयेषु पर्यायेषु वैदिक-सनातन-वर्णाश्रमधर्मस्योत्थानेषु पतनेषु च जातेषु, पह्लव-शक-कुषण्डकुजलकफ्सपुत्र-वेमकफ्स-कनिष्क-तुरुष्कापराभिधश्वेतहूणतोरमाण-मिहिरकुलादिभिश्च क्रमेण भारतवर्षे आक्रान्ते सति कालिदास-शबरस्वामि-कुमारिलभट्ट-प्रभाकरमिश्रादिभिः, विक्रमादित्य-चन्द्रगुप्त-समुद्रगुप्त-कुमारगुप्त-

---

१. महानन्दिसुतश्चाऽपि शूद्रायां कलिकांशजः।
उत्पत्स्यते महापद्मः सर्वक्षत्रान्तको नृपः।। इति।
(मत्स्यपुराणे-२७१।१७, द्र.भागवते १२।१।८-९, वायुपुराणे च-२।३७।३२०)

२. कौटलीयेऽर्थशास्त्रे १९६० तमे क्रैस्ताब्दे मैसूरुविश्वविद्यालयेन प्रकाशिते, १५।१, पृ. ४६२।

३. कौटल्यश्चन्द्रगुप्तं तु ततो राज्येऽभिषेक्ष्यति।
षट्त्रिंशत्तु समा राजा भविताऽशोक एव च।। इति।
(मत्स्यपुराणे,आनन्दाश्रमसंस्करणे-२७२।२३)

४. पुष्यमित्रस्तु सेनानीरुद्धृत्य स बृहद्रथान्।
कारयिष्यति वै राज्यं षट्त्रिंशतिसमा नृपः।। इति।
(मत्स्यपुराणे-२७२।२६, द्र.वायुपुराणे-२।३७।३३१, भागवते च-१२।१।१६-१७)

५. (क) औद्भिज्जो भविता कश्चित् सेनानीः कश्यपो द्विजः।
अश्वमेधं कलियुगे पुनः प्रत्याहरिष्यति।। इति।
(हरिवंशे-३।२।४०)

(ख) कोसलाधिपेन द्विरश्वमेधयाजिनः सेनापतेः पुष्यमित्रस्य षष्ठेन कौशिकीपुत्रेण धनदेवेन धर्मराज्ञा पितुः फल्गुदेवस्य केतनं कारितम्,। इत्ययोध्याशिलालेखे।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

स्कन्दगुप्तादिभिश्च स्वे स्वे काले वैदिकधर्मोत्थानाय राष्ट्ररक्षणाय च क्रमेण विविधे प्रभूते प्रयासे कृतेऽपि हर्षवर्धनसमये पुना राजाश्रयस्य लाभेन जाताद् बौद्धानामुत्थानाद् वैदिक-सनातन-वर्णाश्रमधर्मे म्लानतां गते, दक्षिणापथजात-शङ्करप्रचारितेऽध्यात्मवादे सबल एव स्थितेऽपि वर्णाश्रमधर्मानुसरणे प्रशिथिलीभूते, भारतवर्षस्योत्तरभागे स्थितेषु राजसु दुर्बलेषु जातेषु, तत्र सुदृढे सम्राजि चाऽसति कलियुगाब्दानामष्टात्रिंशत्तमे शतके सिन्धुप्रदेशो कासिमपुत्रेमामुद्दीनमोहमदादीनाम् अरबमुसलबाणानां प्रवेशे जाते, एकचत्वारिंशत्तमे शतके तुरुष्कमुसलबाणेन गजनिनिवासिना सुबुक्तगीनदायादेन महामुत्केन भारतवर्षस्य पाश्चात्त्ये भागे बहुशो लुण्ठिते, त्रिचत्वारिंशत्तमे शतके गोरदेशाभिजनेन गजनिनिवासिना पारसीक-मुसलबाणेन अलाउद्दीनदायादेन सामपुत्रेण शहाबुद्दीनमोहमदेन भारतवर्षप्रमुख-शक्तिस्थाने दिल्लीप्रदेशे च स्वाधीने कृते सति विजितदेशशासने नियुक्तेन तद्दासेन सेनापतिना कुतुबुद्दीनेन ऐबकेन दिल्लीप्रदेशे स्वतन्त्रे मुसलबाणशासने प्रवर्तिते मुसलबाणेषु भारतवर्षे स्वराज्यविस्तारे स्वधर्मप्रचारे च सन्नद्धेषु वैदिकचातुर्वर्ण्यसमाजे प्रायेण विशृङ्खलतां गते कोलाहलपूर्णे च जाते भारतवर्षे वैदिकेऽध्ययने धर्माचरणे च शिथिलशिथिलतरे भवति सति प्रायेण श्रौतधर्मानधि-कारिणं शासकं सामन्तं धनिनं बलिनं वाऽपि समाश्रिता: विज्ञानेश्वर-गोविन्दराज-लक्ष्मीधर-श्रीधर-हलायुध-हरिहर-देवण्णभट्ट-हेमाद्रि-कुल्लूकभट्ट-श्रीदत्त-चण्डेश्वर-माधव-शूलपाणि-रुद्रधर-तरुणवाचस्पतिमिश्र-गोविन्दानन्द-रघुनन्दनाऽऽदित्या-चार्य-नन्दपण्डित-त्रिंशच्छ्लोकीकार-दशश्लोकीकार-नीलकण्ठभट्ट-कमलाकरभट्ट-गदाधरदीक्षित-विश्वनाथनागर-मित्रमिश्र-रामकृष्ण-नागोजिभट्ट-काशीनाथोपाध्याया-दयो धर्मशास्त्र-व्याख्याकार-धर्मशास्त्रनिबन्धकारा अपि तत्तद्वेदशाखासूत्र-विहितानामपि स्नान-सन्ध्योपासन-तर्पण-पञ्चमहायज्ञ-गर्भाधानादिसंस्काराऽन्त्येष्ट्या-शौचपालन-श्राद्धादिकर्मणामपि प्रतिपादने वैदिकधर्मप्रमुखस्थानभूतान् मन्त्रसंहिता-ब्राह्मण-श्रौतसूत्र-गृह्यसूत्र-धर्मसूत्र-श्रौतगृह्यपरिशिष्टादिग्रन्थानुपेक्ष्य अनुस्मृति-पुराणोपपुराणादिग्रन्थानेव विशेषतोऽनुगम्य प्रवृत्ता: सन्तोऽपि स्वस्य व्याख्याग्रन्थस्य निबन्धग्रन्थस्य वाऽपि सर्वेषामेव वेदशाखाविशेषाध्यायिकुलजत्वेन ज्ञायमानानां जनानां समादरणीयत्वं साधयितुमिच्छन्तश्च अनेकवेदशाखोक्त-स्मार्त-पौराण-विधि-मिश्रप्रयोगपरतया तेषां कर्मणां प्रतिपादने ग्रन्थविस्तरमुपयोजयन्त: स्वकीयान् महाकायान् ग्रन्थान् प्रदर्शयन्त: समाजे प्रभविष्णवो लब्धप्रचाराश्चाऽभूवन्निति तेषां ग्रन्थेषु मध्ये कमपि सुप्रापं स्वप्राप्तं ग्रन्थं विलोक्याऽऽधुनिका: पण्डिता आशौचव्यवस्थाविषयकाणां प्रश्नानामुत्तराणि ददति।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

लोके उक्तविधायां स्थितौ सत्यां वैदिकानां द्विजानां कृते तु वस्तुतः स्वगृह्योक्तस्यैव पक्षस्याऽनुसरणीयताः सकलस्मृति-पुराण-शिष्टसम्मतत्वाद् आशौचविषयेऽपि माध्यन्दिनीय-वाजसनेयि-शुक्लयजुर्वेदशाखाध्यायिकुलजैर्द्विजैः पारस्करगृह्यसूत्रोक्तस्यैव पक्षस्य विशेषतोऽनुसरणीयत्वाद् एतस्मिन् विषये पण्डितानां ध्यानमाक्रष्टुं पारस्करगृह्यसूत्रविहितस्याऽऽशौचस्यात्र विशेषतो निरूपणं कर्तुं प्रयासः क्रियते।

एतस्मिन् विषये च प्रथमं विविधे विषये विविधशास्त्रोक्तेषु विविधेषु पक्षेषु सत्सु स्वगृह्योक्ते विषये स्वगृह्योक्तस्यैव पक्षस्याऽनुसरणीयतायाः प्रतिपादकानि स्मृतिपुराणस्थानि ऋषिमुन्यादिवचनानि परिशीलनीयानि। तानि यथा—

(क) न जातु परशाखोक्तं बुधः कर्म समाचरेत् ।  
आचरन् परशाखोक्तं शाखारण्डः स उच्यते ।।  
यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत् ।  
अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति[१] ।। इति।

(ख) यः स्वसूत्रमतिक्रम्य परसूत्रेण वर्तते ।  
अप्रमाणमृषिं कृत्वा सोऽप्यधर्मेण युज्यते[२] ।। इति।

(ग) बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रकीर्तितम् ।  
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत्[३] ।। इति।

(घ) स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः।  
कर्तुमिच्छति दुर्मेधा मोघं तत्तस्य चेष्टितम्[४] ।। इति।

(ङ) स्वशास्त्रे वर्तमाने यः परशास्त्रेण वर्तते ।  
भ्रूणहत्यासमं तस्य स्वशास्त्रमवमन्यतः[५] ।। इति।

---

१. वसिष्ठवचनम्, संस्कारगणपतौ, १९३८ तमे क्रैस्ताब्दे वाराणस्यां मुद्रिते, पृ. १०।

२. विष्णुधर्मोत्तरपुराणे, १९८५ तमे क्रैस्ताब्दे देहल्यां पुनर्मुद्रिते-२।१२७।४८-४९।

३. हस्तलिखिते प्रथमयज्ञपार्श्वग्रन्थे श्लो. ८२; लौगाक्षिस्मृतौ च १९५७ तमे क्रैस्ताब्दे कालीघट्टनगरे मनसुखरायमोरेण प्रकाशितायाम्, स्मृतिसन्दर्भे षष्ठे भागे, पृ. २५७।

४. कात्यायनस्मृतौ (छन्दोगपरिशिष्टे) १।३।२, स्मृतिसन्दर्भे १९५२ तमे क्रैस्ताब्दे मुद्रिते, तृतीये भागे, पृ. १३३९।

५. बौधायनश्रौतसूत्रे, १९८२ तमै क्रैस्ताब्दे देहल्यां पुनर्मुद्रिते, २९।८, तृतीयखण्डे, पृ. ३८०।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

(च) छन्दोवदेव सूत्राणि भवन्ति खलु सूरिणाम् ।
वेदोक्तमपि सूत्रोक्ततुलितं वैदिकोत्तमाः ।।
नाङ्गीकुर्वन्ति बाढं वै सूत्रकारास्तु तेऽखिलाः ।
सर्ववेदैकविज्ञानशालिनः किल वै यतः[1] ।। इति।

(छ) स्वगृह्योक्तमनल्पं वाऽप्यल्पं यस्य प्रचोदितम् ।
तावदेव तु कर्तव्यं तेन सर्वं कृतं भवेत् ।।
यावदुक्तं स्वस्वगृह्ये न कृतं तावदेव तत् ।
परोक्तं वा विमिश्रं वा कृतमप्यकृतं भवेत्[2] ।। इति।

(ज) स्वगृह्यचोदितं कर्म द्विजः कुर्वन् कृती भवेत् ।
अन्यथा पतितो भूयात् सर्वधर्मबहिष्कृतः[3] ।। इति।

(झ) सर्वेषामेव पक्षाणां स्वगृह्योक्तं विधीयते ।
स्वगृह्योक्तस्य चाऽभावे ग्रहणं स्वेच्छया भवेत्[4] ।। इति च ।

एवञ्च धर्मकर्मसु स्वशाखाग्रन्थेषूक्तानां विषयाणां स्वशाखाग्रन्थोक्तरूपेणैवाऽऽचरणीयतायाः, स्वशाखाग्रन्थेष्वनुक्तानां विषयाणां च स्वशाखाग्रन्थैः सूचितत्वे वा आकाङ्क्षितत्वे वा स्वशाखाग्रन्थानामनुकूलत्वे वा अविरोधित्वे वाऽप्येवाऽऽचरणीयतायाश्च सकल-स्मृति-पुराण-शिष्ट-सम्मतत्वादत्र विशेषत आर्यावर्तनिवासिनां बहुसंख्यकानां माध्यन्दिनीय-वाजसनेयि-शुक्लयजुर्वेदशाखाध्यायिनां द्विजातीनां कृते पारस्करगृह्यसूत्रविहितस्य आशौचस्य विवरणं यथामति प्रस्तूयते।

यद्यपि पारस्करगृह्यसूत्रस्य भर्तृयज्ञ-कर्क-जयराम-वासुदेव-हरिहर-रेणुदीक्षिताऽनन्त-देवयाज्ञिक-गर्गोपाध्याय-गदाधर-विश्वनाथ-परशुराम-गङ्गाधर-मुरारिमिश्र-ढौण्ढुमिश्र-बैजनाथ-रामकृष्ण-विद्याधरगौडादिभिरनेकैर्विद्वद्भिर्व्याख्याः

---

१. लौगाक्षिस्मृतौ, स्मृतिसन्दर्भे, षष्ठे भागे, पृ. २७५।

२. शुक्लयजुर्वेदविधानसूत्रे, १९४३ क्रैस्ताब्दे मुम्बय्यां जदुराम-रविशङ्कर-त्रिवेदप्रकाशिते, मन्त्रभ्रान्तिहरसूत्रे, श्लो. ९२-९३; पृ. ६६१।

३. नारदीयपुराणे, १९८४ तमे क्रैस्ताब्दे देहल्यां पुनर्मुद्रिते, १।२४।१०।

४. स्मृतिसङ्ग्रहकारवचनम्, पारस्करगृह्यसूत्रे भाष्यपञ्चकोपेते १९७३ तमे वैक्रमाब्दे मुम्बयीस्थगुजरातीमुद्रणालये मुद्रिते, श्राद्धकाशिकाभागे, पृ. ४८३।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कृता अवगम्यन्ते, तत्र कर्कोपाध्याय-जयराम-हरिहर-रेणुदीक्षित-गदाधर-विश्वनाथ-रामकृष्ण-विद्याधरगौडानां व्याख्यास्तु मुद्रिता अप्युपलभ्यन्ते, तथापि मिताक्षराकार-विज्ञानेश्वर-कृत्यकल्पतरुकारलक्ष्मीधरादिभ्यः पश्चाज्जातानां हरिहरादीनां व्याख्यासु विज्ञानेश्वरादिग्रन्थानामनुचितेन प्रभावेण कर्मणां स्वशाखासूत्राऽना-काङ्क्षिताऽनेकवेदशाखोक्त-स्मार्त-पौराणादिविधिमिश्ररूपेण प्रतिपादनस्य दृश्यमानत्वात् परग्रन्थप्रत्ययेन स्वशास्त्रार्थस्याऽन्यथयितुमनुचितत्वाच्चोक्तानां व्याख्यानामेवाऽवलम्बनमकृत्वाऽत्र पारस्करगृह्यसूत्रग्रन्थस्थ-मूलसूत्रपदवाक्य-प्रकरणानामेव विशेषतोऽनुशीलनं कृत्वा पारस्करगृह्यसूत्रविहितस्य आशौचस्य निरूपणं क्रियते।

तत्र प्रथमं विचारसौकर्याय पारस्करगृह्यसूत्रतृतीयकाण्डस्था दशमी कण्डिका उदककर्मविषया अविकलाऽत्रोपस्थाप्यते—

अथोदककर्म ।।१ ।। अद्विवर्षे प्रेते मातापित्रोराशौचम् ।।२।। शौचमेवे-तरेषाम् ।।३।। एकरात्रं त्रिरात्रं वा ।।४।। शरीरमदग्ध्वा निखनन्ति ।।५।। अन्तःसूतके चेदोत्थानादाशौचं सूतकवत् ।।६।। नात्रोदककर्म ।।७।। द्विवर्षप्रभृति प्रेतमाश्मशानात् सर्वेऽनुगच्छेयुः ।।८।। यमगाथां गायन्तो यमसूक्तं च जपन्त इत्येके ।।९।। यद्युपेतो भूमिजोषणादिसमानमाहिताग्नेरोदकान्तस्य गमनात् ।।१०।। शालाग्निना दहन्त्येनमाहितश्चेत् ।।११।। तूष्णीं ग्रामाग्निनेतरम् ।।१२।। संयुक्तं मैथुनं वोदकं याचेरन्नुदकं करिष्यामह इति ।।१३।। कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते ।।१४।।कुरुध्वमित्येवेतरस्मिन् ।।१५।। सर्वे ज्ञातयोऽपोऽभ्य-वयन्त्या सप्तमात्पुरुषाद् दशमाद्वा ।।१६।। समानग्रामवासे यावत्सम्बन्ध-मनुस्मरेयुः ।।१७।। एकवस्त्राः प्राचीनावीतिनः ।।१८।। सव्यस्याऽनामिक-याऽपनोद्याऽपनः शोशुचदघमिति ।।१९।। दक्षिणामुखा निमज्जन्ति ।।२०।। प्रेतायोदकं सकृत्प्रसिञ्चन्त्यञ्जलिनाऽसावेतत्त उदकमिति ।।२१।। उत्तीर्णाञ्छुचौ देशे शाड्वलवत्युपविष्टाँस्तत्रैतानपवदेयुः ।।२२।। अनवेक्षमाणा ग्राममायान्ति रीतिभूताः कनिष्ठपूर्वाः।।२३।। निवेशनद्वारे पिचुमन्दपत्राणि विदश्याचम्योदकमग्निं गोमयं गौरसर्षपाँस्तैलमालभ्याश्मानमाक्रम्य प्रविशन्ति ।।२४।। त्रिरात्रं ब्रह्मचारिणोऽधः-शायिनो न किञ्चन कर्म कुर्युर्न प्रकुर्वीरन् ।।२५।। क्रीत्वा लब्ध्वा वा दिवैवान्नमश्नीयुरमांसम् ।।२६।। प्रेताय पिण्डं दत्त्वाऽवनेजनदानप्रत्यवनेजनेषु नामग्राहम् ।।२७।। मृन्मये तां रात्रीं क्षीरोदके विहायसि निदध्युः प्रेतात्र स्नाहीति।।२८।। त्रिरात्रं शावमाशौचम् ।।२९।। दशरात्रमित्येके ।।३०।। न

CC-0. Sampurnanand University Collection. Digitized by eGangotri

स्वाध्यायमधीयीरन् ।।३१।। नित्यानि निवर्तेरन् वैतानवर्जम् ।।३२।। शालाग्नौ चैके ।।३३।। अन्य एतानि कुर्युः ।।३४।। प्रेतस्पर्शिनो ग्रामं न प्रविशेयुरानक्षत्र-दर्शनात् ।।३५।। रात्रौ चेदादित्यस्य ।।३६।। प्रवेशनादि समानमितरैः ।।३७।। पक्षं द्वौ वाऽऽशौचम् ।।३८।। आचार्ये चैवम् ।।३९।। मातामहयोश्च ।।४०।। स्त्रीणां चाप्रत्तानाम् ।।४१।। प्रत्तानामितरे कुर्वीरन् ।।४२।। ताश्च तेषाम् ।।४३।। प्रोषितश्चेत्प्रेयाच्छ्रवणप्रभृति कृतोदकाः कालशेषमासीरन् ।।४४।। अतीतश्चेदेकरात्रं त्रिरात्रं वा ।।४५।। अथ कामोदकान्यृत्विक्श्वसुरसखिसम्बन्धिमातुलभागिने-यानाम् ।।४६।। प्रत्तानाञ्च ।।४७।। एकादश्यामयुग्मान् ब्राह्मणान् भोजयित्वा मांसवत् ।।४८।। प्रेतायोद्दिश्य गामप्येके घ्नन्ति ।।४९।। पिण्डकरणे प्रथमः पितॄणां प्रेतः स्यात् पुत्रवाँश्चेत् ।।५०।। निवर्तेत चतुर्थः ।।५१।। संवत्सरं पृथगेके ।।५२।। न्यायस्तु न चतुर्थः पिण्डो भवतीति श्रुतेः।।५३।। अहरहरन्नमस्मै ब्राह्मणायोदकुम्भं च दद्यात् ।।५४।। पिण्डमप्येके निपृणन्ति ।।५५।। इति।

**जननाशौचनिरूपणम्**

पारस्करगृह्यसूत्रे मरणाशौचस्य विषये यथा विस्तृतं प्रतिपादनं प्राप्यते जननाशौचस्य विषये तादृशं प्रतिपादनं न दृश्यते। जननाशौचसम्बद्धानि अधोलिखितानि सूत्राणि पारस्करगृह्यसूत्रे पठ्यन्ते—

(क) अन्तःसूतके चेदोत्थानादाशौचं सूतकवत् ।।(३।१०।६)

(ख) द्वारदेशे सूतिकाग्निमुपसमाधायोत्थानात् सन्धिवेलयोः फलीकरणमिश्रान्-सर्षपानावपति ।। (१।१६।२३)

(ग) दशम्यामुत्थाप्य ब्राह्मणान् भोजयित्वा पिता नाम करोति।।(१।१७।१) इति।

एतेभ्यः सूत्रेभ्यः पारस्करगृह्यसूत्रेऽपि केनापि रूपेण जननाशौचं स्वीक्रियत इति स्फुटतयाऽवगम्यते। ऋग्वेदिनामैतरेयिणां ब्राह्मणे "तदाहुर्य आहिताग्निर्यदि सूतकान्नं प्राश्नीयात् का तत्र प्रायश्चित्तिरिति सोऽग्नये तन्तुमतेऽष्टाकपालं पुरोडाशं निर्वपेत्"[१] इत्युक्तेरुपलम्भाद् वैदिकपरम्परायां केनापि रूपेण जननाशौचं स्वीक्रियत एवेति तु निश्चितमेवास्ति। तत्र पारस्करगृह्यसूत्रे "अन्तःसूतके चेदोत्थानादाशौचं सूतकवत्" इति सूत्रे "अद्विवर्षे प्रेते मातापित्रोराशौचम्" इति

१. ऐतरेयिब्राह्मणे द्वितीये भागे पुण्यपत्तनस्थाऽऽनन्दाश्रमे १९३१ तमे क्रैस्ताब्दे मुद्रिते-३२।८, पृ. ८२३।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

पूर्वसूत्राद् "मातापित्रोः" इति पदस्यानुवृत्तेः,अद्विवर्षबालमरणस्यैव प्राकरणिकत्वाच्चास्य सूत्रस्य कर्कोपाध्याय-जयराम-हरिहरादीनां व्याख्याः सूत्रपदवाक्यप्रकरणाऽननुकूलत्वादुपेक्ष्या दृश्यन्ते। एतस्य सूत्रस्य पदवाक्यप्रकरणानामनुकूलोऽर्थस्तु 'सूतकावधिमध्ये जातके प्रेते सति आ सूतिकोत्थापनात् सूतक इवैव मातापित्रोराशौचं भवति' इत्यवगन्तव्योऽवसीयते "अद्विवर्षे प्रेते मातापित्रोराशौचम्, शौचमेवेतरेषाम्, एकरात्रं त्रिरात्रं वा, शरीरमदग्ध्वा निखनन्ति, अन्तःसूतके चेदोत्थानादाशौचं सूतकवत्"[१] इति प्रकरणात्। हरिहरप्रदर्शितमेतस्य सूत्रस्यान्यदीयम् "अन्तःसूतके चेद् यदि बालस्य मरणमापद्यते, तदा आ उत्थानादाशौचमशुद्धिः सूतकवद् भवति, नत्वाशौचनिवृत्तिः, बालमरणनिमित्ताशौचस्याल्पकालीनत्वेन बहुकालीनजननिमित्ताशौचशोधनाऽसमर्थत्वात्' इति व्याख्यानमप्यस्मदुक्तेऽर्थ एवानुकूलम्। एतदन्यदीयं व्याख्यानं भर्तृयज्ञादिप्राचीनतरव्याख्यातृपरम्परागतं प्रामाणिकं च प्रतीयते। एतस्मात् सूत्राज्जननाशौचं मातापित्रोरेव न सपिण्डानामित्यप्यवगम्यते "मातापित्रोराशौचम्, शौचमेवेतरेषाम्" इति प्रकरणात्। एष पक्षः खलु वैदिकपरम्परायां प्रमुखरूपेणैव वर्तमानोऽभूदिति, अत्र बहूनां ग्रन्थानां वचनानां संवादस्य दर्शनादवगम्यते। तथा हि ग्रन्थान्तराणां वचनानि—

(क) जननेऽप्येवम्, मातापित्रोस्तन्मातुर्वा[२]। इति।

(ख) सूतकं तु सपिण्डानां पित्रोर्वा मातुरेव वा[३]। इति।

(ग) नाऽऽशौचं सूतके प्रोक्तं सपिण्डानां कथञ्चन।
मातापित्रोरशौचं स्यात् सूतकं मातुरेव च[४]।। इति।

(घ) जननेऽप्येवम्, तत्र मातापितरावशुची इति, मातेत्येके[५]। इति।

(ङ) जनने सपिण्डाः शुचयो मातापित्रोस्तु सूतकम्।
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः[६]।। इति।

---

१. पारस्करगृह्यसूत्रे-३।१०।२-६।

२. गौतमप्रणीतधर्मसूत्रे १९३१ तमे क्रैस्ताब्दे पुण्यपत्तनस्थाऽऽनन्दाश्रममुद्रिते-२।५।१३-१४।

३. १९३१ तमे क्रैस्ताब्दे आनन्दाश्रममुद्रितायां हरदत्तकृतायां मिताक्षरायां गौतमप्रणीतधर्मसूत्रवृत्तौ (२।५।१४, पृ. ११३) व्याघ्रवचनम्।

४. तत्रैव अङ्गिरोवचनम्।

५. तत्रैव (पृ. ११४) शङ्खलिखितवचनम्।

६. तत्रैव पैठीनसिवचनम्।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

(च) त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते ।
ऊनद्विवर्ष उभयोः सूतकं मातुरेव हि[१] ।। इति।

(छ) मातापित्रोर्वा, तन्निमित्तत्वात् मातुरित्येके[२] । इति।

(ज) सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकम् ।
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः[३] ।। इति।

(झ) सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकम् ।
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः ।।
यदि पत्न्यां प्रसूतायां सम्पर्कं कुरुते द्विजः ।
सूतकं तु भवेत् तस्य यदि विप्रः षडङ्गवित् ।।
सम्पर्काज्जायते दोषो नान्यो दोषोऽस्ति वै द्विजे ।
तस्मात् सर्वप्रयत्नेन सम्पर्कं वर्जयेद् बुधः[४] ।। इति।

(ञ) पुत्रे जाते दशाहेन कर्मयोग्यो भवेत् पिता ।
मासेन शुध्येज्जननी दम्पती तत्र कारणम्[५] ।। इति च।

एवञ्च 'जनने मातापित्रोरेवाऽऽशौचम्' इति पारस्करपक्षो बहुमुनिवचनसम्मतत्वात् प्रबलोऽवगम्यते। अत्र याज्ञवल्क्यादिवचनानामङ्गस्पर्शाऽस्पर्शविषयकत्वं यद् व्याख्यातृभिरुक्तं तदनुपपन्नं त्रिरात्रं दशरात्रं वा यादृशं शावमाशौचं तेषु वचनेषु प्रतिपादितं तादृशमेव जननाऽऽशौचं तेषु वचनेषु प्रतिपादितं न त्वङ्गस्पर्शास्पर्शविषयकमाशौचमिति प्रकरणादवगम्यमानत्वात्, शब्दप्रमाणकेऽर्थे पदवाक्यप्रकरणेभ्योऽवगम्यमानस्यैवार्थस्य मुख्यतया स्वीकार्यत्वात्, विविधानां मुनिवचनव्यवस्थानां तत्तच्छाखाध्यायिविशेषविषयतया नियतत्वस्य शाखाभेदभिन्नेषु बहुषु कर्मसु गत्यन्तराभावेन स्वीकार्यत्वाच्च। अङ्गस्पर्शास्पर्शविषयकत्वेनैतादृशानां वचनानां व्याख्याने गौतमप्रणीतधर्मसूत्रस्य व्याख्यातुर्हरदत्तस्यापि स्वरसस्याभावस्तेन ''अन्ये भणन्ति''[६] इत्यादिना तादृशस्य व्याख्यानस्य प्रदर्शितत्वादवगम्यते।

---

१. याज्ञवल्क्यस्मृतौ-३।१८।
२. वासिष्ठधर्मशास्त्रे १९३० क्रैस्ताब्दे पुण्यपत्तनस्थ-भाण्डारकरप्राच्यविद्याशोधनमन्दिरेण प्रकाशिते, तृतीये संस्करणे-४।२१-२२।
३. मनुस्मृतौ-५।६२;
४. पराशरस्मृतौ-३।२४-२७।
५. देवीभागवते, वाराणसीस्थ-ठाकुरप्रसाद एण्ड बुकसेलर-नामकेन निकायेन प्रकाशिते-७।१५।९।
६. गौतमप्रणीतधर्मसूत्रव्याख्यायां हरदत्तकृतायां मिताक्षरायाम्-२।५।१४।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

यथा पराशरस्मृतौ—

'एकपिण्डास्तु दायादाः पृथग्दारनिकेतनाः।
जन्मन्यपि विपत्तौ च तेषां तत् सूतकं भवेत्।।
तावत् तत् सूतकं गोत्रे चतुर्थपुरुषेण तु।
दायाद् विच्छेदमाप्नोति पञ्चमो वाऽऽत्मवंशजः''[१]।।

इत्युक्त्वा दायविभागस्य आशौचव्यवस्थायां केनापि रूपेण हेतुत्वं प्रदर्शितम्, यथा च "अविभक्तधनास्त्वेते सपिण्डाः परिकीर्तिताः'' इति ब्रह्मपुराण-वचनेऽपि[२] तथा कृतम्, तथैव बौधायनेनापि आशौचप्रकरणे सपिण्डत्वमवि-भक्तदायेष्वेव विभक्तदायेषु सकुल्यत्वमेवेति प्रतिपाद्य[३] दायविभागस्याऽऽशौच-व्यवस्थायां हेतुत्वं स्वीकृतं प्रतीयते। जननाशौचविषये च बौधायनेन "जनने तावन् मातापित्रोराशौचम्, मातुरित्येके तत्परिहरणात्, पितुरित्यपरे शुक्रप्राधान्यात्, अयोनिजा ह्यपि पुत्राः श्रूयन्ते, मातापित्रोरेव तु संसर्गसामान्यात्''[४] इत्युक्त्वा ऊहापोहपूर्वकं जननाशौचं मातापित्रोरेवेति प्रतिपादितमस्ति। तत्राऽङ्गस्पर्शास्पर्श-विषयक उल्लेखः कृतो नास्ति।

धर्मनैपुण्यकामा ये स्वाध्यायाध्ययनमपि वन एव कुर्वते, ग्रामे तु स्वाध्यायाध्ययनं वर्जयन्ति[५], तादृशानां निपुणं शुद्धिमिच्छतां तेषां विशिष्टानां सपिण्डानामेव जननेऽपि दशरात्रमाशौचमिति पक्षो हि मनुस्मृतावुक्तो दृश्यते। तथा हि—

यथेदं शावमाशौचं सपिण्डेषु विधीयते।
जननेऽप्येवमेव स्यान्निपुणं शुद्धिमिच्छताम्[६]।। इति।

वसिष्ठधर्मशास्त्रेऽपि तादृशमेव वचनं दृश्यते। तथा हि—

जननेऽप्येवमेव स्यान्निपुणं शुद्धिमिच्छताम्[७]।। इति।

---

१. पराशरस्मृतौ, १९५८ तमे क्रैस्ताब्दे श्रीवेङ्कटेश्वरयन्त्रालये मुद्रितायाम्, ३।८-९।
२. कृत्यकल्पतरौ, दशमे भागे, शुद्धिकाण्डे, आशौचनिरूपणे, १९५० तमे क्रैस्ताब्दे वटोदरनगरे मुद्रिते, पृ. ६७।
३. बौधायनधर्मसूत्रे-२०२९ तमे वैक्रमेऽब्दे वाराणस्यां मुद्रिते १।११।७-८।
४. तत्रैव-१।११।१७-२१।
५. नित्यानध्याय एव स्याद् ग्रामेषु नगरेषु च।
धर्मनैपुण्यकामानां पूतिगन्धे च सर्वशः।। इति मनुस्मृतौ-(४।१०७)।
६. मनुस्मृतौ-५।६१।
७. वासिष्ठधर्मशास्त्रे, १९३० तमे क्रैस्ताब्दे पुण्यपत्तने मुद्रिते-४।२०।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अत एव शावाशौचवज्जननाशौचस्य सपिण्डानां कृते प्रबलत्वस्याभावाद् मुहूर्तमार्तण्डकारेण जननाशौचावधिमध्येऽपि आवश्यकतानुसारं कूष्माण्डीहोमं कृत्वा विवाहकर्मापि कर्तुं शास्त्रानुमतिरस्तीत्युल्लिखितम्। तथा हि—

चेत् स्यात् सूतकमुक्तपूर्वसमयेऽनारब्धकार्ये बुधः।
कूष्माण्डीघृतहोमतोऽपि जननाऽऽशौचे क्वचित् कारयेत्[1]।। इति।

तत्र मार्तण्डवल्लभायां स्मृतिवचने च दर्शिते। तथा हि—

(क) सङ्कटे समनुप्राप्ते सूतके समुपागते।
कूष्माण्डीभिर्घृतं हुत्वा गां दत्त्वा च पयस्विनीम्।।
चूडोपनयनोद्वाहौ प्रतिष्ठादिकमाचरेत्[2]।। इति।

(ख) अनारब्धविशुद्ध्यर्थं कूष्माण्डैर्जुहुयाद् घृतम्।
गां दद्यात् पञ्चगव्याशी ततः शुध्यति सूतकी[3]।। इति च।

जननाशौचे वर्तमानेऽपि शारदनवरात्रे देवीपूजा प्रारब्धव्या कर्तव्या चेति प्रतिपादकं वचनं विश्वरूपनिबन्धादिधृतं निर्णयसिन्धावपि दृश्यते। तथा हि—

आश्विने शुक्लपक्षे तु प्रारब्धे नवरात्रके।
शावाशौचे समुत्पन्ने क्रिया कार्या कथं बुधैः।।

सूतके वर्तमाने च तत्रोत्पन्ने सदा बुधैः।
देवीपूजा प्रकर्तव्या पशुयज्ञविधानतः।।

सूतके पूजनं प्रोक्तं दानं चैव विशेषतः।
देवीमुद्दिश्य कर्तव्यं तत्र दोषो न विद्यते[4]।। इति।

तत्र यद्यपि शावाशौचविषयक एव प्रश्नः प्रतीयते, तथाप्युत्तरे सूतकस्यैवोल्लेखात्, सूतके वर्तमानेऽपि देवीपूजाया आरम्भणीयत्वस्य प्रतिपादितत्वात्, 'तत्र दोषो न विद्यते' इति विशेषेणोक्तत्वाच्च जननाशौचस्य सपिण्डान् प्रति देवीपूजाद्यप्रतिबन्धकत्वमास्थितं प्रतीयते।

---

१. मुहूर्तमार्तण्डे, १८२६ तमे शकाब्दे वाराणसीस्थचन्द्रप्रभाख्यमुद्रणालये मुद्रिते, विवाहप्रकरणे, श्लो. ५३ (पृ. ७४)।

२. तत्रैव मार्तण्डवल्लभायाम्, पृ. ७५; ३. तत्रैव।

४. निर्णयसिन्धौ, २०४२ तमे वैक्रमेऽब्दे वाराणसीस्थकृष्णदासाकादमीतः पुनर्मुद्रिते, पृ. १२७।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अतीतस्य जननाशौचस्य विषये पारस्करगृह्यसूत्रे कोऽप्युल्लेखो नास्ति। याज्ञवल्क्यस्मृतावपि तद्विषयकं वचनं न दृश्यते। मनुस्मृतौ—

'निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः''[१]।।

इत्युक्तत्वात्, देवलेनाऽपि ''नाऽशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपि''[२] इत्युक्तत्वाच्च अतीतस्य जननाशौचस्य सपिण्डं प्रति सुतरामकिञ्चित्करत्वम्, पितरं प्रत्येव शुद्ध्यर्थकस्नानप्रयोजकत्वं चावगम्यते। वस्तुतस्तु पारस्करगृह्यसूत्रानुयायिनां याज्ञवल्क्यस्मृत्यनुयायिनां च कृतेऽतीतस्य जननाशौचस्य पितरं प्रति शुद्ध्यर्थकस्नानप्रयोजकत्वमपि नास्त्येवेत्यवसीयते, तत्र वचनाभावात्।

गर्भस्रावे गर्भपाते जातमृते मृतजाते चाऽऽशौचस्य विधायकानि विविधानि स्मृतिवचनानि दृश्यन्ते। तथा हि—

(क) गर्भस्रावे मासतुल्या निशाः शुद्धेस्तु कारणम्[३]। इति।

(ख) रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति।
रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला[४]।। इति।

(ग) ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रमाशौचम्, सद्यः शौचमिति गौतमः[५]।। इति।

(घ) गर्भस्रावे मासतुल्या रात्रयः स्त्रीणाम्, स्नानमात्रमेव पुरुषस्य[६]।। इति।

(ङ) गर्भस्रावे गर्भमाससम्मिता रात्रयः स्त्रीणाम्[७]।। इति।

(च) गर्भमाससमा रात्रीः स्रंसने गर्भस्य त्र्यहं वा[८]।। इति।

(छ) मासतुल्यैरहोरात्रैर्गर्भस्रावे[९]।। इति।

---

१. मनुस्मृतौ-५।७७।
२. पराशरस्मृतौ, माधवाचार्यकृतव्याख्यासहितायाम्, १९७४ तमे क्रैस्ताब्दे कालीघट्टनगरस्थेन एसियाटिकसोसाइटिनामकेन निकायेन पुनर्मुद्रिते, प्रथमे भागे, पृ. ६००।
३. याज्ञवल्क्यस्मृतौ-३।२०। ४. मनुस्मृतौ-५।६६।
५. वासिष्ठधर्मशास्त्रे, १९३० तमे क्रैस्ताब्दे पुण्यपत्तने मुद्रिते-४।३४-३५।
६. वृद्धवसिष्ठवचनम्, याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।२०।
७. बौधायनधर्मसूत्रे, २०२९ तमे वैक्रमेऽब्दे वाराणस्यां मुद्रिते-१।११।२९।
८. गौतमप्रणीतधर्मसूत्रे, १९३१ तमे क्रैस्ताब्दे आनन्दाश्रममुद्रिते-२।५।१५-१६।
९. विष्णुस्मृतौ, १९६४ तमे क्रैस्ताब्दे अड्यारपुस्तकालयप्रकाशिते-२२।२५।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

(ज) षड्मासाभ्यन्तरे यावद् गर्भस्रावो भवेद् यदा ।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ।।
अत ऊर्ध्वं स्वजात्युक्तं तासामाशौचमिष्यते ।
सद्यःशौचं सपिण्डानां गर्भस्य पतने सति[१] ।। इति।

(झ) आ चतुर्थाद् भवेत् स्रावः पातः पञ्चमषष्ठयोः ।
अत ऊर्ध्वं प्रसूतिः स्याद् दशाहं सूतकं भवेत् ।।
स्रावे मातुस्त्रिरात्रं स्यात् सपिण्डाशौचवर्जनम् ।
पाते मातुर्यथामासं पित्रादीनां दिनत्रयम्[२] ।। इति।

(ञ) दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः ।
शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते[३] ।। इति।

(ट) जातमृते मृतजाते वा सपिण्डानां दशाहम्[४] । इति।

(ठ) जातमृते मृतजाते वा कुलस्य सद्यःशौचम्[५] । इति।

(ड) अन्तर्दशाहोपरतस्य सूतिकाहोभिरेवाशौचम्[६] । इति।

(ढ) मुहूर्तं जीवितो बालः पञ्चत्वं यदि गच्छति ।
मातुः शुद्धिर्दशाहेन सद्यःशुद्धास्तु गोत्रिणः[७] ।। इति।

(ण) जीवञ्जातो यदि मृतो मृतः सूतक एव तु ।
सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम्[८] ।। इति।

(त) अनिवृत्ते दशाहे तु पञ्चत्वं यदि गच्छति ।
सद्य एव विशुद्धिः स्यान्न प्रेतं नैव सूतकम्[९] ।। इति।

---

१. स्मृतिवचनम्, याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।२०।
२. मरीचिवचनं तत्रैव, पराशरस्मृतौ च (३।१७) प्रथमः श्लोकः पठ्यते।
३. बृहन्मनुवचनम्, याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।२०।
४. हारीतवचनम्, तत्रैव; ५. विष्णुस्मृतौ-२२।२६, मिताक्षरायां च-३।२०।
६. स्मृत्यन्तरवचनम्, याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।२०।
७. बृहत्प्रचेतोवचनम्, तत्रैव।
८. बृहन्मनुवचनम्, तत्रैव।
९. कात्यायनवचनम्, याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।२०, शङ्खवचनं हारलतायां च, पृ. ४१।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

(थ) अदन्तजाते तनये शिशौ गर्भच्युते सति ।
सपिण्डानां तु सर्वेषामहोरात्रमशौचकम्[१] ।। इति।

(द) यावन्न च्छिद्यते नालं तावन्नाऽऽप्नोति सूतकम् ।
छिन्ने नाले ततः पश्चात् सूतकं तु विधीयते[२] ।। इति।

(ध) जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते ।
माता शुध्येद् दशाहेन स्नानात्तु स्पर्शनं पितुः[३] ।। इति च।

उपरि दर्शितानि विविधानि वचनानि दृष्ट्वा मूलग्रन्थपदवाक्यप्रकरणान्यविचार्यैव मिताक्षराकारादयः सपिण्डान् प्रति विविधरूपेण जननाशौचव्यवस्था दर्शयन्ति; किन्तु ता व्यवस्थाः "अद्विवर्षे प्रेते मातापित्रोराशौचम्, शौचमेवेतरेषाम्, एकरात्रं त्रिरात्रं वा, शरीरमदग्ध्वा निखनन्ति, अन्तःसूतके चेदोत्थानादाशौचं सूतकवत्"[४] इति पारस्करगृह्यसूत्रविधानस्य प्रतिकूलत्वात् पारस्करगृह्यसूत्रानुयायिभिरुपेक्ष्या अवगम्यन्ते। सपिण्डे जाते मातापितृव्यतिरिक्तानां पारस्करगृह्यसूत्रानुयायिनां सपिण्डानाम्, अद्विवर्षे सपिण्डे प्रेते च मातापितृभ्यां निर्हारकेभ्यश्च व्यतिरिक्तानां पारस्करगृह्यसूत्रानुयायिनां सपिण्डानां किमप्याशौचं न भवत्येव, आशौचविधानस्यापि प्रायेण प्रतिशाखं भिन्नत्वेन शाखान्तरविधानमूलकस्मृतिपुराणवचनानां च शाखान्तरानुयायिभिरननुसरणीयत्वात्। गर्भस्राविण्याः शुद्धिश्च रजस्वलायाः शुद्ध्या तुल्या, सा च श्रुतावेव स्फुटेति गृह्यसूत्रकारेणोपेक्षिताऽवगम्यते, तथापि गर्भस्रावे गर्भमासतुल्याभी रात्रिभिर्गर्भस्राविण्याः शुद्धिः स्वचरणगुरुयाज्ञवल्क्यनामाङ्कितस्मृतिवचनात् पारस्करगृह्यसूत्रानुसारिभिरपि स्वीकर्तुं शक्या।

**मरणाशौचे बालमरणाशौचनिरूपणम्**

अद्विवर्षे बाले प्रेते मातापित्रोरेवाऽऽशौचं भवति, पारस्करगृह्यसूत्रानुयायिनां माध्यन्दिनीय-वाजसनेयि-शुक्लयजुर्वेदशाखाध्यायिनामन्येषां सपिण्डानां द्विजातीनामाशौचं नैव भवति, शौचमेव भवति, तत्रापि बालेऽकृतचूडे प्रेते मातापित्रोरेकरात्रमाशौचं भवति, कृतचूडे बाले प्रेते तु त्रिरात्रमाशौचं भवति, अथवा

१. यमवचनम्, निर्णयसिन्धौ, २०४२ तमे वैक्रमेऽब्दे वाराणसीस्थकृष्णदासाकादमीमुद्रिते, पृ. ३६५।
२. जैमिनिवचनम्, याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।२०।
३. संवर्तवचनम्, तत्रैव-३।१९;
४. पारस्करगृह्यसूत्रे-३।१०।२-६।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

येषां गुणवतामुपनीते सपिण्डे प्रेते त्रिरात्रमाशौचं भवति तादृशयोर्गुणवतोर्मातापित्रोरकृतचूडे कृतचूडे चाऽद्विवर्षे बाले प्रेते एकरात्रमाशौचं भवति, येषां गुणोत्कर्षहीनानामुपनीते सपिण्डे प्रेते दशरात्रमाशौचं भवति तादृशयोर्गुणोत्कर्षहीनयोर्मातापित्रोस्त्वकृतचूडे कृतचूडे चाऽद्विवर्षे बाले प्रेते त्रिरात्रमाशौचं भवतीत्यवगम्यते। तथा हि पारस्करगृह्यसूत्रे—

अद्विवर्षे प्रेते मातापित्रोराशौचम्। (३।१०।२)

शौचमेवेरेषाम्। (३।१०।३)

एकरात्रं त्रिरात्रं वा। (३।१०।४) इति।

अत्र एकरात्रं वाऽऽशौचमित्यत्र व्यवस्थापकं चूडाकरणमिति पक्षः,

'गुणामकृतचूडानां विशुद्धिर्नैशिकी स्मृता।
निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते''[१]।।

इत्यादीनां वचनानां दर्शनात् प्रदर्शितो बोध्यः। द्वितीयस्तु पक्षः पारस्करस्यैव ''त्रिरात्रं शावमाशौचम्, दशरात्रमित्येके''[२] इति वचनं विचार्य दर्शितोऽवगन्तव्यः।

यद्यप्यपरिवत्सर एव बाले प्रेते मातापित्रोर्निर्हर्तॄणां चैवाऽऽशौचम्, परिवत्सरे बाले तु अद्विवर्षेऽपि प्रेते सपिण्डानामप्याशौचं भवतीति व्यवस्थाऽऽपस्तम्बकृष्णयजुर्वेदशाखाध्यायिनां दृश्यते[३], तथापि अद्विवर्षे बाले प्रेते पारस्करगृह्यसूत्रानुयायिनां मातापितृभिन्नानां सपिण्डानां त्वाशौचं नैव भवतीत्यवगन्तव्यम्। एतेनाऽऽशौचव्यवस्थाऽपि शाखाभेदेन अधिकारिभेदाद् भिन्नाऽपि भवतीति च स्फुटं भवति। एवं चार्वाचीनानां धर्मशास्त्रनिबन्धकाराणां सर्वेषामाशौचविषयकाणां स्मृतिवचनानामेकवाक्यतायाः, विषयविभागेन समन्वितातायाः, सर्वथा परस्पराऽविरोधितताया वा प्रतिपादने य आग्रहः, स तु मौलिकवैदिकपरम्परायां तत्तच्छाखागृह्यसूत्रधर्मसूत्रादिषु दृश्यमानाया अनुरूपो नेति च स्पष्टं भवति। एवं चाऽऽशौचविषयेऽपि स्वशाखाग्रन्थव्यवस्थैवाऽनुसरणीयेति विद्वद्भिरवगन्तव्यम्। अत एव—

''आ दन्ताज्जन्मतः सद्य आ चूडान् नैशिकी स्मृता[४]''।।

---

१. मनुस्मृतौ-५।६७; २. पारस्करगृह्यसूत्रे-३।१०।२९-३०।

३. प्रेतेषूदकोपस्पर्शनं गर्भान् परिहाप्याऽपरिवत्सरान् मातापितरावेव तेषु, हर्तारश्च। इति (आपस्तम्बधर्मसूत्रे, २०२६ तमे वैक्रमेऽब्दे वाराणस्यां मुद्रिते-२।६।३।२-४ पृ. २०७)

४. पराशरस्मृतौ-३।१९।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

'ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः।
अलङ्कृत्य शुचौ भूमावस्थिसञ्चयनादृते।।
नास्य कार्योऽग्निसंस्कारो न च कार्योदकक्रिया।
अरण्ये काष्ठवत् त्यक्त्वा क्षपेत त्र्यहमेव च।।
नाऽत्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया।
जातदन्तस्य वा कुर्युर्नाम्नि वाऽपि कृते सति'[१]।।
'अदन्तजाते तनये शिशौ गर्भच्युते तथा।
सपिण्डानां तु सर्वेषामहोरात्रमशौचकम्'[२]।।
'यद्यप्यकृतचूडो वै जातदन्तस्तु संस्थितः।
तथाऽपि दाहयित्वैनमाशौचं त्र्यहमाचरेत्''[३]।।

(उदकक्रियाऽऽशौचं च) आ दन्तजननादित्येके''[४], ''ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रम्''[५], ''उदकदानं सपिण्डैः कृतचूडस्य, तत्स्त्रीणां च''[६], ''दन्तजाते त्वकृतचूडे त्वहोरात्रेण (कुलस्य शौचम्)''[७] इत्यादिकानि स्वशाखागृह्यसूत्रप्रतिकूलानि वचनानि माध्यन्दिनीयवाजसनेयिशुक्लयजुर्वेद-शाखाध्यायिभिरुपेक्ष्याणि। यद्यपि ''आ दन्तजन्मनः सद्य आ चूडान् नैशिकी स्मृता''[८] इति वचनं याज्ञवल्क्यस्मृतेर्विज्ञानेश्वरपाठे दृश्यते, तथापि विश्वरूपपाठे तस्याऽभावात्, तस्य वचनस्य पारस्करगृह्यसूत्रविहिताशौचव्यवस्थायाः प्रतिकूलत्वाच्च पारस्करगृह्यसूत्रानुयायिभिस्तदपि वचनमुपेक्ष्यमेव, स्वशाखासूत्रस्य श्रुतितुल्यत्वात्। अद्विवर्षे बाले प्रेते मातापितृभ्यामपि उदकदानं तु नैव कार्यम्, वचनान्तरेषु क्वचिद् दृश्यमानस्यापि तस्य ''नात्रोदककर्म''[९] इति पारस्करेण निषिद्धत्वात्।

---

१. मनुस्मृतौ-५।६८-७०।
२. यमवचनम्, याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।२३।
३. अङ्गिरोवचनम्, तत्रैव।
४. वासिष्ठधर्मशास्त्रे, १९३० तमे क्रैस्ताब्दे पुण्यपत्तने मुद्रिते-४।९-१०।
५. तत्रैव-४।३४।
६. गौतमप्रणीतधर्मसूत्रे, १९३१ तमे क्रैस्ताब्दे आनन्दाश्रममुद्रिते-२।५।३२-३३।
७. विष्णुस्मृतौ, १९६४ तमे क्रैस्ताब्दे अड्यारपुस्तकालयप्रकाशितायाम्-२२।२६-२९।
८. याज्ञवल्क्यस्मृतौ विज्ञानेश्वरव्याख्यायाम्-३।२३।
९. पारस्करगृह्यसूत्रे-३।१०।७।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**कुमारमरणाशौचविचारः**

पूर्णद्विवर्षादीनामनुपनीतानां कुमाराणां मरणे "अद्विवर्षे प्रेते मातापित्रोराशौचम्, शौचमेवेतरेषाम्"[१] इति, "द्विवर्षप्रभृति प्रेतमाश्मशानात् सर्वेऽनुगच्छेयुः"[२] इति, "यद्युपेतो भूमिजोषणादिसमानमाहिताग्नेरोदकान्तस्य गमनात्"[३] इति, "सर्वे ज्ञातयोऽपोऽभ्यवयन्त्या सप्तमात् पुरुषाद् दशमाद् वा, समानग्रामवासे यावत् सम्बन्धमनुस्मरेयुः"[४] इति च पारस्करवचनानां दर्शनात् सप्तमपुरुषपर्यन्तानां दशमपुरुषपर्यन्तानां वा समानग्रामनिवासिनां तु समानं मूलं पुरुषं स्मरतां सर्वेषामेव ज्ञातीनां किमपि आशौचं भवतीति ज्ञायते। तेषां कियत्कालाशौचं भवतीति पारस्करगृह्यसूत्रे स्पष्टं नास्ति, तथापि, अद्विवर्षे प्रेते दहनस्य "शरीरमदग्ध्वा निखनन्ति"[५] इति वचनेन उदककर्मणश्च "नाऽत्रोदककर्म"[६] इति वचनेन पारस्करेण निषिद्धत्वाद् द्विवर्षे त्वनुपनीतेऽपि प्रेते पारस्करमते मातापितृव्यतिरिक्ताः सपिण्डादयो दाहोत्तरं स्नात्वोदकं दत्त्वा शुध्यन्तीति, प्रेतस्पर्शिनस्तु सपिण्डादयः सज्योतिराशौचमपि पालयित्वाऽनन्तरं शुध्यन्तीति, अन्ये तु प्रेतस्पर्शिनः स्नात्वा सज्योतिराशौचं पालयित्वा शुध्यन्तीति चाऽवगम्यते "सर्वे ज्ञातयोऽपोऽभ्यवयन्त्या सप्तमात् पुरुषाद् दशमाद् वा, समानग्रामवासे यावत् सम्बन्धमनुस्मरेयुः"[७] इति, "प्रेतायोदकं सकृत् प्रसिञ्चन्त्यञ्जलिनाऽसावेतत् त उदकमिति"[८] इति, "प्रेतस्पर्शिनो ग्रामं न प्रविशेयुरानक्षत्रदर्शनात्, रात्रौ चेदादित्यस्य, प्रवेशनादि समानमितरैः"[९] इति च पारस्करवचनेभ्यः। एवञ्च "स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः। यथोक्तेनैव कल्पेन शुध्यन्ति तु सनाभयः"[१०], "नृणामकृतचूडानां विशुद्धिर्नैशिकी स्मृता। निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते"[११], "यद्यप्यकृतचूडो वै जातदन्तश्च संस्थितः। तथापि दाहयित्वैनमाशौचं त्र्यहमाचरेत्"[१२], "अविशेषेण वर्णानामर्वाक् संस्कारकर्मणः।

---

१. पारस्करगृह्यसूत्रे-३।१०।२-३। २. तत्रैव-३।१०।८;

३. तत्रैव-३।१०।१० ४. तत्रैव-३।१०।१६-१७;

५. तत्रैव-३।१०।५; ६. तत्रैव-३।१०।७।

७. तत्रैव-३।१०।१६-१७; ८. तत्रैव ३।१०।२१।

९. तत्रैव-३।१०।३५-३७।

१०. मनुस्मृतौ-५।७२, अग्निपुराणे-१५७।८, कूर्मपुराणे-२।२३।२८-३०; विष्णुधर्मोत्तरपुराणे च-२।७५।१०-११। ११. मनुस्मृतौ-५।६७।

१२. अङ्गिरोवचनम्, याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।२३।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वह्ना विधीयते''[१], ''ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रम्''[२], ''दन्तजाते त्वकृतचूडे त्वहोरात्रेण, कृतचूडे त्वसंस्कृते त्रिरात्रेण''[३] इत्यादीनि वचनानि तु पारस्करगृह्यसूत्रानुयायिभिरुपेक्ष्याण्येव। यच्च ''आ दन्तजन्मनः सद्य आ चूडान् नैशिकी स्मृता। त्रिरात्रमा व्रतादेशाद् दशरात्रमतः परम्''[४] इति याज्ञवल्क्यस्मृतेर्विज्ञानेश्वरपाठे वचनम् तदपि विश्वरूपपाठेऽभावात् पारस्करगृह्यसूत्रप्रतिकूलत्वाच्चोपेक्ष्यमेव। विज्ञानेश्वरभक्तैरपि पारस्करगृह्यसूत्रानुयायिभिस्तद्वचनं स्वसूत्रानुकूल्याय मातापितृविषयकत्वादिना नेयम्। एतादृशान्येव पराशरस्मृत्यग्निपुराणादिवचनानि च[५] पारस्करगृह्यसूत्रानुयायिभिरुपेक्ष्याण्येव। पूर्णद्विवर्षादीनामकृतचूडानां कुमाराणां कुमारीणां च मरणे मातापित्रोरेकरात्रमाशौचं कृतचूडानामनुपनीतानां मरणे तु त्रिरात्रमाशौचमित्यादिकं तु ''एकरात्रं त्रिरात्रं वा'' इति पारस्करवचनादेवाऽवगन्तव्यम्।

## उपनीतसपिण्डमरणाशौचनिरूपणम्

उपनीतस्य निरग्नेः साग्नेराहिताग्नेर्वाऽपि सपिण्डस्य ब्राह्मणस्य मरणे पुत्रदारभिन्नस्य सपिण्डस्य ब्राह्मणस्य त्रिरात्रमाशौचं भवतीति पारस्करगृह्यसूत्रे प्रथमः कल्पो दृश्यते। तथा हि—

यद्युपेतो भूमिजोषणादि समानमाहिताग्नेरोदकान्तस्य गमनात्। (३।१०।१०)

शालाग्निना दहन्त्येनमाहितश्चेत्, तूष्णीं ग्रामाग्निनेतरम्। (३।१०।११-१२)

त्रिरात्रं शावमाशौचम्, दशरात्रमित्येके। (३।१०।२९-३०) इति।

यद्यपि याज्ञवल्क्यस्मृतौ विज्ञानेश्वरपाठे ''आ दन्तजन्मनः सद्य आ चूडान् नैशिकी स्मृता। त्रिरात्रमा व्रतादेशाद् दशरात्रमतः परम्''[६] इति वचनमपि दृश्यते, तथापि तस्य विश्वरूपपाठेऽभावात्, विश्वरूपविज्ञानेश्वरोभयसम्मतेन ''त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते''[७] इत्यनेन, ''पिण्डयज्ञावृता देयं प्रेतायाऽन्नं

---

१. अङ्गिरसो वचनम्, याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।२३।

२. वासिष्ठधर्मशास्त्रे-४।३४; ३. विष्णुस्मृतौ-२२।२९-३०।

४. याज्ञवल्क्यस्मृतौ मिताक्षरासहितायाम्-३।२३।

५. पराशरस्मृतौ-३।१९, अग्निपुराणे-१५७।५-६, कूर्मपुराणे-२।२३।१३, गरुडपुराणे १।१०६।१३, १।१०७।१७, विष्णुधर्मोत्तरपुराणे च-२।७५।८, ३।२३२।७।

६. याज्ञवल्क्यस्मृतौ मिताक्षरासहितायाम्-३।२३।

७. याज्ञवल्क्यस्मृतौ बालक्रीडासहितायां मिताक्षरासहितायां च-३।१८।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

दिनत्रयम्''[१] इत्यनेन च याज्ञवल्क्यवचनेनैव चाप्यस्य सुसमन्वयस्याऽभावाच्च आ दन्तजन्मनः सद्य इत्यादिकमेतद् वचनं पारस्करगृह्यसूत्रानुयायिनां कृतेऽनादरणीयमेवाऽवगम्यते। ''त्रिरात्रं दशरात्रं वा शावमाशौचमिष्यते''[२] इति याज्ञवल्क्यवचनमेव पारस्करगृह्यसूत्रस्याऽनुकूलं दृश्यते।

त्रिरात्रं सपिण्डानां शावमाशौचं भवतीति पक्षोऽपि अन्येष्वपि बहुष्वेव ग्रन्थेषूल्लिखितो दृश्यते। तथा हि—

(क) दशाहं शावमाशौचं सपिण्डेषु विधीयते।
अर्वाक् सञ्चयनादस्थ्नां त्र्यहमेकाहमेव वा[३] ।। इति।

(ख) अधश्शय्यां हविष्यभक्षता प्रत्यूहनं च कर्मणामेकरात्रं त्रिरात्रं नवरात्रं वा, नाऽथाहानि वर्धयेयुरिति ह स्माऽऽह कौषीतकिः[४]। इति।

(ग) अनशनाऽनध्ययनाऽधश्शय्योदकोपस्पर्शनानि आ कालमनूचानेषु, द्व्यहं त्र्यहं षडहं द्वादशाहं वा गुरुषु[५]। इति।

(घ) अनशनाऽनध्ययनाऽधश्शय्योदकोपस्पर्शनानि आ कालम्, अनूचानेषु द्व्यहं त्र्यहं षडहं द्वादशाहं वा गुरुष्वनशनवर्जं संवत्सरम्[६]। इति।

(ङ) मातरि पितर्याचार्य इति त्रिरात्रमक्षारलवणभोजनमधश्शयनं ब्रह्मचर्यम्, द्व्यहं त्र्यहं षडहं द्वादशाहं संवत्सरं वा, यावद्ग्रहणं द्वादशाहावरार्ध्यं परमगुरुषु, एवमघोदकम्, इतरेषु त्रिरात्रम्, यावज्जीवं प्रेतपत्नी[७]। इति।

(च) अतः शुद्धिं प्रवक्ष्यामि जनने मरणे तथा।
दिनत्रयेण शुध्यन्ति ब्राह्मणाः प्रेतसूतके[८] ।। इति।

---

१. याज्ञवल्क्यस्मृतौ बालक्रीडासहितायाम्-३।१४, मिताक्षरासहितायाम्-३।१६।

२. याज्ञवल्क्यस्मृतौ-३।१८; ३. मनुस्मृतौ-५।५९।

४. कौषीतकिगृह्यसूत्रे, १९८२ तमे क्रैस्ताब्दे देहल्यां पुनर्मुद्रिते-५।४।९-१०।

५. सत्याषाढपितृमेधसूत्रे सत्याषाढश्रौतसूत्रे १९३२ तमे क्रैस्ताब्दे आनन्दाश्रममुद्रिते, २८।२।७३।

६. भारद्वाजपैतृमेधिकसूत्रे, १९६४ तमे क्रैस्ताब्दे पुण्यपत्तने मुद्रिते भारद्वाजश्रौतसूत्रे संलग्ने-१।८।९-११।

७. बौधायनपितृमेधसूत्रे, १९८२ तमे क्रैस्ताब्दे देहल्यां पुनर्मुद्रिते बौधायनगृह्यसूत्रे संलग्ने-१।१२।१०। आग्निवेश्यगृह्यसूत्रे च, १९४० तमे क्रैस्ताब्दे ट्रावन्कोरविश्वविद्यालयेन प्रकाशिते-३।६।२।

८. पराशरस्मृतौ-३।१।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

(छ) त्रिरात्रं दशरात्रं वा शावमाशौचमुच्यते[१]। इति।

(ज) दिनत्रयेण शुध्येत ब्राह्मणः प्रेतसूतके[२]। इति च।

पारस्करगृह्यसूत्रे द्वितीयकल्पत्वेनाऽऽगतः 'उपनीतस्य सपिण्डस्य मरणे सपिण्डस्य ब्राह्मणस्य दशरात्रमाशौचं भवति' इति पक्षोऽपि बहुष्वेव ग्रन्थेष्वागतोऽस्ति। तत्र चोक्तेभ्यो वचनेभ्योऽतिरिक्तानि वचनानि, यथा—

(क) दशाहं शावमाशौचं सपिण्डेषु विधीयते[३]। इति।

(ख) अक्षारलवणाशिनो दशाहं कटमासीरन्[४]। इति।

(ग) शावमाशौचं दशरात्रमनृत्विग्दीक्षितब्रह्मचारिणां सपिण्डानाम्[५]। इति।

(घ) ब्राह्मणस्य सपिण्डानां जननमरणयोर्दशाहमाशौचम्[६]। इति।

(ङ) दशाहं शावमाशौचं सपिण्डेषु विधीयते।
जनने च तथाऽशुद्धिर्ब्राह्मणानां भृगूत्तम[७]।। इति।

(च) दशाहं प्राहुराशौचं सपिण्डेषु विपश्चितः।
मृतेषु वाऽथ जातेषु ब्राह्मणानां द्विजोत्तमाः[८]।। इति च।

एवञ्च सपिण्डानां कृते "त्रिरात्रं शावमाशौचम्, दशरात्रमित्येके"[९] इति पारस्करवचनं गुण्यगुणभेदेन व्यवस्थितमिव प्रतीयते। पुरातनकाले प्रायेण सर्वेषां ब्राह्मणानां वेदवत्त्वस्याऽवगम्यमानत्वात्, केषाञ्चित्तु वेदवत्त्वस्याऽग्निमत्त्वस्य चाऽवगम्यमानत्वात्, प्रायः सर्वेषामेव ब्राह्मणानां संस्कारसम्पादन-संस्कारपालन-शिखासूत्रधारण-स्नानसन्ध्योपासन-गायत्रीजप-भक्ष्याऽभक्ष्यकार्याकार्यादिविषयक-शास्त्रशिष्टोक्तनियमपालनयुक्तत्वस्य चाऽवगम्यमानत्वात् पुराकाले ब्राह्मणानां कृते सपिण्डानां शावाऽऽशौचं त्रिरात्रं भवतीति औत्सर्गिकरूपेण पारस्करगृह्यसूत्रादिषु

---

१. गरुडपुराणे, १९८४ तमे क्रैस्ताब्दे देहल्यां पुनर्मुद्रिते-१।१०६।१४; याज्ञवल्क्यस्मृतौ च-३।१८।

२. गरुडपुराणे-१।१०७।१०;

३. वासिष्ठधर्मशास्त्रे-४।१६।

४. बौधायनधर्मसूत्रे-१।११।२२;

५. गौतमप्रणीतधर्मसूत्रे-२।५।१।

६. विष्णुस्मृतौ (विष्णुधर्मसूत्रे)-२२।१।

७. अग्निपुराणे, नागप्रकाशकपुनर्मुद्रिते-१५९।१-२।

८. कूर्मपुराणे, काशिराजन्याससंस्करणे, २।२३।१।

९. पारस्करगृह्यसूत्रे-३।१०।२९-३०।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

विहितमवगम्यते। अग्निवेदहीनानां ब्राह्मणानां कृत एव तत्र दशरात्रमाशौचं भवतीत्युक्तं प्रतीयते। प्राक् प्रदर्शितानि मनुस्मृत्यादिवचनान्यप्येतस्यैव पक्षस्योपोद्बलकानि प्रतीयन्ते। एतस्य पक्षस्योपोद्बलकानि अन्यान्यपि नानास्मृतिपुराणवचनानि च दृश्यन्ते। तथा हि—

(क) एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः।
त्र्यहात् केवलवेदस्तु द्विहीनो दशभिर्दिनैः[1]॥ इति।

(ख) त्रिरात्रेण विशुध्येत विप्रो वेदाग्निसंयुतः।
पञ्चाहेनाऽग्निहीनस्तु दशाहाद् ब्राह्मणब्रुवः[2]॥ इति।

(ग) दशाहं निर्गुणे प्रोक्तमाशौचं वाऽतिनिर्गुणे।
एकद्वित्रिगुणैर्युक्तश्चतुस्त्र्येकदिनैः शुचिः[3]॥ इति।

(घ) एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः।
हीने हीनतरे चैव त्र्यहश्चतुरहस्तथा[4]॥ इति।

(ङ) गुणोत्कर्षे दशाहाप्तौ त्र्यहमेकाहकं त्र्यहे।
एकाहाप्तौ सद्यः शौचं सर्वत्रैवं समूहयेत्[5]॥ इति।

(च) सम्पर्काद् दुष्यते विप्रो जनने मरणे तथा।
सम्पर्काच्च निवृत्तस्य न प्रेतं नैव सूतकम्[6]॥ इति।

(छ) एकाहाद् यज्ञयाजीनां शुद्धिरुक्ता स्वयम्भुवा।
ततस्त्वधीतशाखानां चतुर्भिः सर्वदेहिनाम्[7]॥ इति च।

तत्र कात्यायननिगमपरिशिष्टस्य एकविंश्यां कण्डिकायां स्थितस्य "आहिताऽग्निमरणेऽशौचं त्रिरात्रं सञ्चयनदर्शनात्, सकुल्यमरणे दशाहम्, गुरौ च" इति वचनस्य, "सञ्चयनं चतुर्थ्यामयुग्मान् ब्राह्मणान् भोजयित्वा पलाशवृन्ते-

---

१. पराशरस्मृतौ-३।५, दक्षस्मृतौ-६।६, दाल्भ्यस्मृतौ च, श्लो. १२०।

२. बृहस्पतिवचनम्, हरदत्तकृतायां गौतमप्रणीतधर्मसूत्रव्याख्यायां मिताक्षरायाम्-२।५।१।

३. कूर्मपुराणे काशिराजन्याससंस्करणे-२।२३।७।

४. अग्निपुराणे, नागप्रकाशकपुनर्मुद्रिते-१५८।१०-११।

५. तत्रैव-१५८।१४; ६. पराशरस्मृतौ-३।१९-२०।

७. लिङ्गपुराणे, १९८१ तमे क्रैस्ताब्दे मोतीलालबनारसीदासेन मुद्रापिते-१।८९।१८०।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

नाऽस्थीनि परिवर्त्याऽङ्गुष्ठकनिष्ठिकाभ्यामादाय पलाशपुटे प्रास्यति''[१] इति कात्यायनवचनस्य च दृश्यमानत्वात्, लक्ष्मीधरेणापि अस्थिसञ्चयनान्तस्यैव मरणाशौचाद्याशौचनिरूपणस्य कृतत्वाच्च[२] पारस्करमुनिना ''त्रिरात्रं शावमाशौचम्, दशरात्रमित्येके''[३] इत्यत्र प्रथमपक्षतयोक्तः 'त्रिरात्रं सपिण्डानां शावमाशौचम्' इति पक्षो मुख्यतया श्रौताग्निमति सपिण्डे प्रेते ब्राह्मणानां सपिण्डानां कृतेऽस्तीति प्रतीयते। तथापि नानामुनिवचनसंवादात् श्रौताग्निरहिते उपनीते ब्राह्मणे सपिण्डे प्रेतेऽपि गुणवतां ब्राह्मणानां त्रिरात्रमाशौचं गुणहीनानां ब्राह्मणानां च दशरात्रमाशौचमिति व्यवस्थाऽपि पारस्करवचनानुकूलैवेति च वक्तुं शक्यं दृश्यते।

श्रीधर[४]-देवण्णभट्ट[५]-हेमाद्रि[६]-माधव[७]-नीलकण्ठभट्ट[८]-कमलाकरभट्ट[९]-मित्रमिश्र[१०]-काशीनाथोपाध्याय[११]-प्रभृतिभिरर्वाचीनैर्धर्मशास्त्रनिबन्धकारैः कानिचन लघुस्मृति-पुराणवचनानि प्रदर्श्य वृत्तस्वाध्यायसापेक्षस्याऽघसङ्कोचस्य कलिवर्ज्यत्वे प्रतिपादिते दृश्यमानेऽपि प्राचीनतरैश्चतुर्विंशतिमतसङ्ग्रहकार-षट्त्रिंशन्मतसङ्ग्रहकार-स्मृतिसङ्ग्रहकार-विश्वरूप-शम्भु-श्रीकर-मेधातिथि-धारेश्वरभोजदेव-देवस्वामि-विज्ञानेश्वरादिभिर्धर्मशास्त्रसमुच्चय-धर्मशास्त्रव्याख्या-धर्मशास्त्रनिबन्धकारै-

---

१. कात्यायनश्रौतसूत्रे, १९८७ तमे क्रैस्ताब्दे वाराणसीस्थेन अच्युतग्रन्थमालाकार्यालयेन मुद्रापिते-२५।८।१।

२. कृत्यकल्पतरौ, दशमे भागे, शुद्धिकाण्डे १९५० तमे क्रैस्ताब्दे वटोदरनगरे प्रकाशिते, पृ. १-११३।

३. पारस्करगृह्यसूत्रे-३।१०।२९-३०।

४. स्मृत्यर्थसारे-१९१२ तमे क्रैस्ताब्दे आनन्दाश्रमे मुद्रिते, पृ. २।

५. स्मृतिचन्द्रिकायाम्, १९८८ तमे क्रैस्ताब्दे नागप्रकाशकपुनर्मुद्रितायाम्, संस्कारकाण्डे, पृ. ३०।

६. चतुर्वर्गचिन्तामणौ परिशेषखण्डे, ालनिर्णये १९८५ तमे क्रैस्ताब्दे वाराणस्यां पुनर्मुद्रिते, पृ. ६६७।

७. पराशरस्मृतौ माधवाचार्यव्याख्यासहितायाम्, १९७४ तमे क्रैस्ताब्दे कालीघट्टनगरे पुनर्मुद्रितायाम्-१।२४, पृ. १२४; ३।२, पृ. ५७८।

८. भगवन्तभास्करे समयमयूखे, १९८६ तमे क्रैस्ताब्दे वाराणस्यां पुनर्मुद्रिते, पृ.१८१।

९. निर्णयसिन्धौ-१९४९ तमे क्रैस्ताब्दे निर्णयसागरमुद्रायन्त्रालयमुद्रिते, पञ्चमे संस्करणे, पृ. २६३।

१०. वीरमित्रोदये समयप्रकाशे, १९३५ तमे क्रैस्ताब्दे वाराणस्यां प्रकाशिते, पृ. २६१-२६२।

११. धर्मसिन्धुसारे (धर्मसिन्धौ), १९०४ तमे क्रैस्ताब्दे निर्णयसागरमुद्रायन्त्रालयमुद्रिते, द्वितीयावृत्तिके, पृ. २७३-२७५।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

रर्वाचीनधर्मशास्त्रनिबन्धोल्लिखितलघुस्मृतिपुराणाद्युक्तकलिवर्ज्यप्रकरणस्याऽनुल्लिखितत्वस्याऽनाद्रियमाणत्वस्य वाऽपि स्मृतिचन्द्रिकादिलेखादिभ्य एवाऽप्यवगम्यमानत्वात्, ''मानुषाणां हितं धर्मं वर्तमाने कलौ युगे। शौचाचारं यथावच्च वद सत्यवतीसुत''[१] इति, ''कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः। द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः''[२] इति च पराशरस्मृतावेवोल्लिखितत्वात् कलावेवानुसरणीयायां पराशरस्मृतौ ''एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः। त्र्यहात् केवलवेदस्तु द्विहीनो दशभिर्दिनैः''[३] इत्युक्त्वा वृत्तस्वाध्यायसापेक्षस्याऽघसङ्कोचस्योपदिष्टत्वात्, स्मृति-पुराणयोर्विरोधे च स्मृतेरेव बलीयस्त्वस्य ''श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते। तत्र श्रौतं प्रमाणं स्यात् तयोर्द्वैधे स्मृतिर्वरा''[४] इति, ''श्रुतिस्मृती उभे नेत्रे पुराणं हृदयं स्मृतम्। एतत्त्रयोक्त एव स्याद् धर्मो नाऽन्यत्र कुत्रचित्।। विरोधो यत्र तु भवेत्त्रयाणां तु परस्परम्। श्रुतिस्तत्र प्रमाणं स्याद् द्वयोर्द्वैधे स्मृतिर्वरा''[५] इति चोक्तत्वादपि सर्वयुगसाधारणतया प्रवृत्ते पारस्करगृह्यसूत्रे कलियुगारम्भसमय एवोपदिष्टतयाऽवगम्यमानायां याज्ञवल्क्यस्मृतौ च ब्राह्मणानां कृते विहितः सपिण्डस्य ब्राह्मणस्य मरणे त्रिरात्रमाशौचमिति पक्षः कल्यर्थकपराशरस्मृत्याऽप्यनुमोदित इति गुणवता ब्राह्मणेन कलावप्यनुसरणीय एवेत्यवगन्तव्यम्।

साधारणानां ब्राह्मणानामग्निवेदरहितानां निकृष्टानां ब्राह्मणानां चाऽपि कृते चतुर्थपुरुषपर्यन्तं दशरात्रम्, पञ्चमपुरुषे षड्रात्रम्, षष्ठे पुरुषे चतूरात्रम्, सप्तमे पुरुषे एकरात्रं सपिण्डब्राह्मणाशौचं भवतीत्यादिकस्यार्थस्य प्रतिपादकानि वचनानि च नानास्मृतिपुराणेषु दृश्यन्ते। तथा हि—

(क) चतुर्थे दशरात्रं स्यात् षण्निशाः पुंसि पञ्चमे ।
षष्ठे चतुरहाच्छुद्धिः सप्तमे तु दिनत्रयात्[६] ।। इति।

(ख) षष्ठे तु शुध्येतैकाहं पञ्चमे त्र्यहमेव तु ।
चतुर्थे सप्तरात्रं स्यात् त्रिपुरुषं दशमेऽहनि[७] ।। इति।

---

१. पराशरस्मृतौ-१।२।

२. तत्रैव-१।२४-२५; ३. तत्रैव-३।५।

४. वेदव्यासस्मृतौ, १९२९ तमे क्रैस्ताब्दे आनन्दाश्रमेण स्मृतीनां समुच्चये सङ्गृह्य प्रकाशितायाम्-१।४।

५. देवीभागवते-१।१।२०-२१।

६. पराशरस्मृतौ-३।१०, दाल्भ्यस्मृतौ च, श्लो. ११९; ७. लिखितस्मृतौ, श्लो.-९१।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

(ग) आ चतुर्थात्तु सम्पूर्णः पञ्चाहः पञ्चशाखिनाम् ।
त्रिदिनं षष्ठशाखीनां सप्तशाखी दिनत्रयम् ।।
अष्टमी तु अहोरात्रमेकाहं नवमी तथा।
दशमी स्नानमात्रेण शाखया सूतकं भवेत्[१] ।। इति।

(घ) चतुर्थे दशरात्रं स्यात् षडहः पञ्चमे तथा।
षष्ठे चैव त्रिरात्रं स्यात् सप्तमे त्र्यहमेव च ।।
अष्टमे दिनमेकं तु नवमे प्रहरद्वयम् ।
दशमे स्नानमात्रेण सूतके तु शुचिर्भवेत्[२] ।। इति।

(ङ) एकपिण्डास्तु दायादाः पृथग्द्वारनिकेतनाः ।
जन्मना च विपत्तौ च भवेत्तेषां तु सूतकम् ।।
चतुर्थे दशरात्रं स्यात् षण्निशाः पुंसि पञ्चमे ।
षष्ठे चतुरहाच्छुद्धिः सप्तमे च दिनत्रयम्[३] ।। इति च ।

एतानि वचनानि च केनापि रूपेण गृह्यसूत्र-पितृमेधसूत्र-धर्मसूत्र-मनु-स्मृत्यादिप्रमुखस्मृत्यादिवचनानामनुकूलानीति सम्पर्काऽसम्पर्कसमानग्रामवासाऽसमानग्रामवास-स्नेहसद्भावाऽसद्भावसमानधर्मित्वाऽसमानधर्मित्वाऽऽचारविचार-साम्याऽसाम्यादीनां विचारेण स्वस्वशाखाग्रन्थानुकूलांशे मान्यान्यनुसर्तव्यान्येव च प्रतीयन्ते। तत्र "यत् पुनः स्मृत्यन्तरवचनं 'चतुर्थे दशरात्रं स्यात् षण्निशाः पुंसि पञ्चमे। षष्ठे चतुरहाच्छुद्धिः सप्तमे त्वहरेव तु' इति तद्विगीतत्वाऽऽदरणीयम्"[४] इति वदता विज्ञानेश्वरेण विभिन्नेषु गृह्यसूत्र-धर्मसूत्र-स्मृतिपुराणेषु दृश्यमानानामाशौचव्यवस्थानां परस्परविगीतत्वात् ताः सर्वा अपि नाऽऽदरणीया इति किन्नु नोक्तमित्याश्चर्यं भवति। तत्र विगीतत्वे-नैवाऽनादरणीयत्वं न वक्तुं शक्यमिति मत्वैव नूनं विज्ञानेश्वरेण "यद्यप्यविगीतं तथापि मधुपर्काङ्गपश्वालम्भनवल्लोकविद्विष्टत्वान्नाऽनुष्ठेयम्, 'अस्वर्ग्यं लोकविद्विष्टं

---

१. ब्रह्मप्रोक्तयाज्ञवल्क्यसंहितायाम्, २०१० तमे वैक्रमेऽब्दे मोरप्रकाशिते स्मृतिसन्दर्भे चतुर्थे भागे संलग्नायाम्-१३।२३-२४।

२. अत्रिसंहितायां स्मृतीनां समुच्चये सङ्गृहीतायाम्, श्लो. ८७-८८।

३. गरुडपुराणे, १९८४ तमे क्रैस्ताब्दे नागप्रकाशकेन पुनर्मुद्रिते-१।१०७।१२-१४।

४. याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।१८।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

धर्म्यमप्याचरेन्न तु'[१] इति मनुस्मरणात्''[२] इत्युक्तम्। यदि सामान्यतया लोकविद्विष्टत्वादेव शास्त्रीयो धर्मः परित्याज्य इति विज्ञानेश्वर-सिद्धान्तः सर्वथा स्वीकार्यः स्यात्, तदा ब्राह्मणानां शिखाधारण-नित्यस्नान-सन्ध्योपासन-लशुन-पलाण्डु-कुक्कुटाण्ड-शीधु-मधु-मैरेयादिमद्य-हट्टालयदाल-भक्ताऽशुचिस्पृष्टसजल-लवणपक्वान्नादिपरिहारोऽस्पृश्यस्पर्शनिमित्तकस्नानादिक आचारश्चेति सर्वमपि शास्त्रोक्तधर्मानुष्ठानमिदानीं साधारणलोकविद्विष्टत्वात् परित्याज्यं मन्तव्यं स्यात्। किं बहुना, सर्वोऽपि वेदस्मृतिपुराणमूलकोऽदृष्टार्थको धर्म इदानीमन्धविश्वा-समूलकत्वव्यपदेशेन लोके द्विष्टत्वादननुष्ठेयः स्यात्। अत एव लोकद्विष्टत्वादिक-मनादृत्य विश्वरूपस्तु तत्र "(दशरात्रं त्रिरात्रं वा शावमाशौचमुच्यते' इति याज्ञवल्क्यस्मृतिवचने) वाशब्दश्चोभयत्र स्मृत्यन्तरोक्तचतुरहपक्षिण्यादि-कल्पानुसारेण यथायोगं विकल्पार्थः''[३] इति वदन् स्मृत्यन्तरोक्तचतुरह-पक्षिण्याद्याशौचपक्षाणामपि याज्ञवल्क्यस्मृतिकारसम्मतत्वं प्रदर्शयति।

**सोदक-सकुल्य-सगोत्राऽसगोत्रबन्ध्वाशौचविचारः**

अष्टमपुरुषप्रभृतिचतुर्दशपुरुषपर्यन्तानां सोदकानां[४] ज्ञातीनाम्, पञ्चदश-पुरुषप्रभृत्येकविंशपुरुषपर्यन्तानां सकुल्यानां ततः परेषां च ज्ञातीनां कृते शावाशौचव्यवस्था पारस्करगृह्यसूत्रे विशेषेण प्रतिपादिता न दृश्यते। अन्येषु ग्रन्थेषु क्वचित् सोदकानां कृते त्रिरात्रमाशौचं सकुल्यानां कृते एकरात्रमाशौचं स्नानमात्रं वाऽपि च विहितं दृश्यते[५]। तत्र वचनेषु चतुर्दशपुरुषात् परे सकुल्या एव सगोत्रा

---

१. याज्ञवल्क्यस्मृतौ-१।१५६।

२. याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम् ३।१८।

३. याज्ञवल्क्यस्मृतिव्याख्यायां १९८२ तमे क्रैस्ताब्दे देहल्यां पुनर्मुद्रितायां बालक्रीडायाम्-३।१८।

४. सपिण्डता तु पुरुषे सप्तमे विनिवर्तते।
समानोदकभावस्तु निवर्तेताऽऽचतुर्दशात्।। इति।
(अग्निपुराणे-१५८।३०, द्र.मनु. ५।६०, कूर्म. २।२३।६२)

५. (क) दशाहेन सपिण्डास्तु शुध्यन्ति प्रेतसूतके।
त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः।। इति बृहस्पतिवचनं स्मृतिचन्द्रिकायाम्।
(आशौचकाण्डे, पृ. ३५-३६; अग्निपुराणे च-१५८।२९)

(ख) 'त्र्यहं समानोदकानां गोत्रजानामहः स्मृतम्'। इति जाबालवचनम्।
(वीरमित्रोदये शुद्धिप्रकाशे, वाराणसीसंस्करणे, पृ. ३३)

(ग) असपिण्डे योनिसम्बन्धे सहाध्यायिनि च (पक्षिणीमाशौचं कृत्वा शुध्येरन्) इति।
(गौतमधर्मसूत्रे-२।५।१८)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

गोत्रका गोत्रजा इति वोक्ता बोद्धव्याः। मनुस्मृत्यादौ क्वचित्तु सपिण्डभिन्नाः सर्वे सोदका उक्ता दृश्यन्ते। तत्र सोदक-सकुल्य-सगोत्रभेदः स्पष्टीकृतो नोपलभ्यते। पारस्करमते तु अष्टमपुरुषप्रभृतिचतुर्दशपर्यन्तानां सोदकानां पञ्चदशपुरुषप्रभृत्येकविंशपुरुषपर्यन्तानां सकुल्यानां द्वाविंशपुरुषादिकानां सगोत्राणां च समानग्रामवासिनां सर्वेषां ज्ञातीनां मूलपुरुषस्य निश्चितरूपेण स्मर्यमाणत्वात् प्रेतमनुगच्छतां समानरूपेणैवापस्नानं कृत्वोदके दत्ते शुद्धिर्भवतीति गम्यते। प्रेतस्पर्शिनां तु भिन्नगोत्राणामपि सर्वेषां सज्योतिराशौचं तु भवत्येवेति त्वन्यत्।

अतोऽस्मिन् विषये च माध्यन्दिनीयवाजसनेयिशुक्लयजुर्वेदशाखाध्यायिभिर्द्विजातिभिः पारस्करोक्तैव व्यवस्थाऽऽदर्तव्या नाऽन्या।

सावित्र्या ऋचो दातुर्गुरोः, विधिपूर्वकं वेदस्य वेदाङ्गानां चाऽध्यापयितुर्गुरोः, मातामहस्य, मातामह्याः, उपनीतानामप्रत्तानां सपिण्डकन्यानां च मरणे अन्येषां सपिण्डनां मरण इवैवाऽऽशौचं भवतीति विधानं पारस्करगृह्यसूत्रेऽस्ति। तथा हि—

आचार्ये चैवम्। (३।१०।३९)

मातामहयोश्च। (३।१०।४०)

स्त्रीणां चाऽप्रत्तानाम्। (३।१०।४१) इति।

एतादृश्येव व्यवस्था याज्ञवल्क्यस्मृतेर्विश्वरूपसम्मते "एवं मातामहाऽऽचार्याऽप्रत्तानां चोदकक्रिया" इति वचने च दृश्यते। तत्र "एवं मातामहाचार्यप्रत्तानां चोदकक्रिया" इति पाठो लेखकप्रमादजो विश्वरूपं विज्ञानेश्वरं च मोहयामास किल। तस्मात् पारस्करगृह्यसूत्रसंवादात् पूर्वापरग्रन्थसमन्वयाच्चाऽस्मदुक्त एव पाठः साधुः। तस्मादप्येतस्मिन् विषये पारस्करगृह्यसूत्रानुयायिभिर्माध्यन्दिनीय-वाजसनेयि-

---

(घ) असपिण्डे, स्ववेश्मनि मृते च (एकरात्रेण शुध्येत्)। इति (विष्णुस्मृतौ-२२।४६)

(ङ) मातामहानां मरणे त्रिरात्रं स्यादशौचकम्।
एकोदकानां मरणे सूतके चैतदेव हि।। इति।
(कूर्मपुराणे, काशिराजन्याससंस्करणे-२।२३।३१)

(च) सोदकैस्तु क्रियाः कार्याः सर्वाः सञ्चयनात् परम्। इति।
(मार्कण्डेयपुराणे जीवानन्दसंस्करणे ३५।४४।

(छ) गोत्रजैस्तु क्रियाः सर्वाः कार्याः सञ्चयनात् परम्। इति।
(ब्रह्मपुराणे, नागप्रकाशकेन पुनर्मुद्रिते-११३।१५१)

(ज) सद्यःशौचं समुद्दिष्टं सगोत्रे संस्थिते सति। इति।
(कूर्मपुराणे, काशिराजन्याससंस्करणे-२।२३।३७)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

शुक्लयजुर्वेदाध्यायिभिर्द्विजातिभिः पारस्करोक्तैव व्यवस्था स्वीकर्तव्या न तु षडशीति-त्रिंशच्छ्लोकी-दशश्लोकी-निर्णयसिन्धु-धर्मसिन्धुप्रभृतिषु ग्रन्थान्तरेषु प्रतिपादिता व्यवस्थेत्यवसीयते।

सपिण्डे, आचार्ये, मातामहे च देशान्तरे मृते, मातामह्यामुपनीतायामप्रत्तायां सपिण्डकन्यायां च देशान्तरे मृतायां चाऽपि श्रवणप्रभृति-कालशेषमाशौचं पालनीयमिति व्यवस्था च पारस्करगृह्यसूत्रेऽस्ति। तथा हि—

प्रोषितश्चेत् प्रेयाच्छ्रवणप्रभृति-कालशेषमासीरन्। (३।१०।४४) इति।

**ऋत्विगाद्यसगोत्राशौचनिरूपणम्**

ऋत्विजः, श्वशुरस्य, श्वश्वाः, सख्युः, सख्याः, पितुः, पितृष्वसुः, पुत्रस्य, पितुर्मातृष्वसु पुत्रस्य, पितुर्मातुलस्य पुत्रस्य, मातुः पितृष्वसुः पुत्रस्य, मातुर्मातृष्वसुः पुत्रस्य, मातुर्मातुलस्य पुत्रस्य, आत्मनः पितृष्वसुः पुत्रस्य, आत्मनो मातृष्वसुः पुत्रस्य, आत्मनो मातुलस्य पुत्रस्य, (पितुर्मातुलस्य, मातुर्मातुलस्य,) मातुलस्य, भागिनेयस्य, प्रत्तायाः पितृष्वसुः स्वसुः दुहितुश्च मरणे इच्छायां सत्यामुदकदानं कर्तव्यमसत्यां न कर्तव्यमिति व्यवस्था पारस्करेण विहिताऽस्ति। तथा हि—

अथ कामोदकान्यृत्विक्श्वशुरसखिसम्बन्धिमातुलभागिनेयानाम्, प्रत्तानां च। (३।१०।४६-४७) इति।

प्रायेणैतादृश्येव व्यवस्था याज्ञवल्क्यस्मृतावपि दृश्यते। तथा हि—

कामोदकं सखिप्रत्तास्वस्रीयश्वशुरर्त्विजाम्। (३।४) इति।

एवञ्च ऋत्विगादीनां समानग्रामवासे स्नेहविशेष उपकारकत्वविशेषे आचारविचारसाम्यादौ च सति तेषां मरणे स्वेच्छयाऽपस्नानमुदकदानं च कृत्वा यथौचिति आशौचं पालनीयम्, समानग्रामवासादीनामभावे इच्छायामसत्यां च तेषां मरणेऽपस्नानमुदकदानमाशौचपालनं च न कर्तव्यमिति व्यवस्था पारस्कराऽभिमताऽवगम्यते।

एतादृश्यां स्वशाखागृह्यसूत्रव्यवस्थायां सत्याम् ऋत्विगादिमरणविषये आशौचपालनस्याऽऽवश्यकत्वस्य प्रतिपादकानि लघुस्मृति-पुराणादिवचनानि तदनुसारीणि षडशीति-त्रिंशच्छ्लोकी-दशश्लोकी-निर्णयसिन्धु-धर्मसिन्धुप्रभृति-ग्रन्थकारकृतानि प्रतिपादनानि च पारस्करगृह्यसूत्रानुयायिभिर्नाऽऽदर्तव्यानि।

इच्छया ऋत्विगादिमरणनिमित्तकेऽपस्नाने उदकदाने च कृतेऽपि सद्यः

CC-0. Sampurnanand University Collection. Digitized by eGangotri

शुद्धिर्भवतीति पारस्करसम्प्रदायोऽवगम्यते, आशौचकालविशेषस्य पारस्करेणाऽनुक्तत्वात्। एवञ्च "अहस्तु दत्तकन्यासु बालेषु च विशोधनम्। गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च"[१], "मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च"[२], "असपिण्डेषु यथाऽऽसन्नं त्रिरात्रमहोरात्रमेकाहमिति कुर्वीत, आचार्योपाध्यायतत्पुत्रेषु त्रिरात्रं पक्षिण्येकाहम्, ऋत्विजां च, शिष्यसतीर्थ्यसब्रह्मचारिषु त्रिरात्रमहोरात्रमेकाहमिति कुर्वीत"[३], "आचार्यपत्नीपुत्रोपाध्यायमातुलश्वशुरश्वशुर्यसहाध्यायिशिष्येष्वतीतेष्वेकरात्रेण"[४], "असपिण्डे योनिसम्बन्धे सहाध्यायिनि च (पक्षिणीम्), सब्रह्मचारिण्येकाहम्"[५], "आचार्यतत्पुत्रस्त्रीयाज्यशिष्येषु चैवम् (त्र्यहम्)"[६] इत्यादीनि वचनानि च पारस्करानुयायिभिरुपेक्ष्याणि।

तत्र "प्रत्तानामितरे कुर्वीरन्, ताश्च तेषाम्"[७] इति पारस्करवचनाद् दत्तानां पितृष्वसृ-स्वसृ-दुहित्रादीनां स्त्रीणां मरणे तासां पतिपक्षेणैव निर्हरण-दहनाऽपस्नानाचरणोदकदानाशौचपालनेषु कर्तव्येषु, ताभिश्च जीवन्तीभिः पतिपक्षज्ञातीनामेव निर्हरणादिषु कर्तव्येषु अवगतेष्वपि दुहितुः कृते पित्रोस्तु गुरुत्वात् प्रत्तयाऽपि तया तयोर्मरणे समावृत्तेनाऽप्याचार्यमरणे इवाऽपस्नानमुदकदानं त्रिरात्रमाशौचपालनं च कर्तव्यमेवेत्यर्थः पारस्करगृह्यसूत्रस्थोदककर्मकण्डिकापरिशीलनादवगम्यते।

## क्षत्रिय-वैश्य-शूद्राशौचनिरूपणम्

क्षत्रिय-वैश्ययोः कृते सपिण्डमरणाशौचं पक्षपरिमितं भवति, शूद्रस्य कृते तु पक्षद्वयपरिमितं भवतीत्ययमर्थोऽपि पारस्करेण सूचितोऽस्ति। तथा हि—

पक्षं द्वौ वाऽऽशौचम्। (३।१०।३८) इति।

तत्र यद्यपि कर्कादिभिर्मनुस्मृति-याज्ञवल्क्यस्मृत्यादिवचनैरपवाहितैः पारस्करवचनादपि क्षत्रियाणां कृते सपिण्डमरणे द्वादशरात्रमाशौचमित्यर्थो हठादानिनीषितो दृश्यते, तथापि वेदाध्ययनाधिकारवतोरपि क्षत्रियवैश्ययोर्वेदाध्यापनाधिकाररहितयोः सपिण्डमरणे आशौचं पक्षपरिमितं तुल्यमेवेति पारस्करमतं

१. याज्ञवल्क्यस्मृतौ विश्वरूपपाठे-३।२२, विज्ञानेश्वरपाठे-३।२४।
२. मनुस्मृतौ-५।८१।
३. बौधायनधर्मसूत्रे-१९७२ तमे क्रैस्ताब्दे वाराणस्यां मुद्रिते-१।११।२५-२८।
४. विष्णुस्मृतौ (विष्णुधर्मसूत्रे)-२२।४४।
५. गौतमप्रणीतधर्मसूत्रे, आनन्दाश्रममुद्रिते-२।५।१८-१९; ६. तत्रैव-२।५।२६।
७. पारस्करगृह्यसूत्रे-३।१०।४२-४३।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

शब्दादवगम्यमानं निष्क्रमाणया वाशब्दे कृतया लक्षणयाऽन्यथयितुमनुचितमेव मन्तव्यम्। "पञ्चदशरात्रेण राजन्यः"[१], "दशाहं ब्राह्मणानां तु क्षत्रियाणां त्रिपञ्चकम्। विंशद्रात्रं तु वैश्यानां शूद्राणां मासमेव हि"[२], "ब्राह्मणो दशरात्रेण पञ्चदशरात्रेण क्षत्रियः। वैश्यो विंशतिरात्रेण शूद्रो मासेन शुध्यति"[३] इति वचनानां दर्शनात्, विश्वरूपेण "ब्राह्मणस्य दशाहं तु भवति प्रेतसूतकम्। क्षत्रस्य द्वादशाहानि विशां पञ्चदशैव वा"[४] इति याज्ञवल्क्यवचनस्य व्याख्यायां "विशां पञ्चदशैव वेति वाशब्दः स्मृत्यन्तरोक्तावध्यन्तरविकल्पार्थतया सर्वत्राऽविशेषेण द्रष्टव्यः" इत्युक्तत्वात्, हरदत्तेन च "एकादशरात्रं क्षत्रियस्य"[५] इति गौतमवचनस्य व्याख्यायां "द्वादशरात्रेणेति याज्ञवल्क्यः, पञ्चदशरात्रेणेति वसिष्ठः, दशरात्रेणेति पराशरः, षोडशाहमिति पैठीनसिः" इति क्षत्रियस्य क्षत्रियसपिण्डमरणाशौचावधिविषये नानाविधानां मुनिमतानां प्रदर्शितत्वात्, "द्वादशाहं राजन्यस्य"[६] इति विष्णुवचनस्य व्याख्यायां केशववैजयन्त्यां नन्दपण्डितेनाऽपि "किञ्च राजन्यः क्षत्रियस्तस्याशौचं द्वादशाहम्; दशरात्रं वृद्धपराशरः, एकादशाहं गौतमः, पञ्चदशाहं वसिष्ठः, षोडशाहं पैठीनसिः; तदेषां कल्पानां यथाचारं व्यवस्था" इत्युक्तत्वाच्च क्षत्रियाशौचावधिविषये मुनिवचनेषु विभिन्नानां कालानामवगम्यमानत्वात् पारस्करमते क्षत्रियस्य क्षत्रिय-सपिण्डमरणे पक्षपरिमितमेवाऽऽशौचं स्वीकर्तव्यं पक्षशब्दस्य तत्र श्रूयमाणत्वाद् द्वादशरात्रशब्दस्य द्वादशाहशब्दस्य वा तत्राऽश्रूयमाणत्वादिति विवेक्तव्यम्।

अद्यत्वे तु गृह्यसूत्रवचनानि, धर्मसूत्रवचनानि, मनु-याज्ञवल्क्य-पराशर-शङ्ख-देवलादिस्मृतिवचनानि नानापुराणवचनानि च सर्वाण्यवधीर्य "सर्वेषामेव वर्णानां सूतके मृतके तथा। दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवीत्"[७] इत्येक-मङ्गिरोवचनं पुरस्कृत्याऽर्वाचीनैर्विज्ञानेश्वरादिभिर्धर्मशास्त्रव्याख्याकारधर्मशास्त्रनिबन्ध-कारैः क्षत्रिय-वैश्य-शूद्राणां कृतेऽपि सजातिसपिण्डमरणे दशाहमेवाऽऽशौचमिति पक्षः प्रचारितो लोके प्रचलति। सोऽयं पक्षो गृह्यसूत्रादिव्यवस्थाप्रतिकूलो विद्वद्भिर्भृशं विचारणीयः। वर्णापेक्षाऽऽशौचव्यवस्था कलियुगेऽपि विकल्पेनाऽनुसरणीयेति तु कैश्चिदर्वाचीनतरैर्धर्मशास्त्रनिबन्धकारैरप्युक्तमस्त्येवेति च बुधैः स्मर्तव्यम्।

---

१. वासिष्ठधर्मशास्त्रे-४।२८।

२. देवलवचनम्, पराशरस्मृतिव्याख्यायां माधवाचार्यकृतायाम्, कालीघट्टनगरे मुद्रितायाम्, प्रथमे भागे, पृ. ५७०।

३. वसिष्ठवचनम्, तत्रैव-पृ. ५७१। ४. याज्ञवल्क्यस्मृतौ, बालक्रीडासहितायाम्-३।१९;

५. गौतमप्रणीतधर्मसूत्रे-२।५।२। ६. विष्णुस्मृतौ-२२।२;

७. याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।२२।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**अतिक्रान्ताशौचनिरूपणम्**

सपिण्डस्य, आचार्यस्य, मातामहस्य, मातामह्याः, उपनीताया अप्रत्तायाः सपिण्डकन्यायाश्चाऽतिक्रान्ताशौचं श्रुत्वा "त्रिरात्रं शावमाशौचम्, दशरात्रमित्येके" इति वचने अनुसृत्य येषां कृते पूर्णमाशौचं त्रिरात्रं स्वीक्रियते तैरेकरात्रम्, येषां कृते पूर्णमाशौचं दशरात्रं स्वीक्रियते तैस्त्रिरात्रमाशौचं कर्तव्यमिति व्यवस्था पारस्करगृह्यसूत्रे स्थिताऽवगम्यते। तथा हि—

अतीतश्चेदेकरात्रं त्रिरात्रं वा। (३।१०।४५) इति।

एतस्मिन् विषये ग्रन्थान्तरेषु तु नानाविधा व्यवस्था उक्ता दृश्यन्ते। तथा हि—

(क) देशान्तरस्थे प्रेत ऊर्ध्वं दशाहाच्छ्रुत्वैकरात्रमाशौचम्[१]। इति।

(ख) श्रुत्वा चोर्ध्वं दशम्याः पक्षिणीम्[२]। इति।

(ग) व्यतीतेऽशौचे संवत्सरान्तस्त्वेकरात्रेण। ततः परं स्नानेन (शुध्येत्)।[३] इति।

(घ) अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत्।
संवत्सरे व्यतीते तु स्पृष्ट्वैवाऽपो विशुध्यति[४]।। इति।

(ङ) अतीते दशरात्रे तु त्रिरात्रमशुचिर्भवेत्।
तथा संवत्सरेऽतीते स्नात एव विशुध्यति[५]।। इति।

(च) प्रोषिते कालशेषः स्यात् पूर्णे दत्त्वोदकं शुचिः[६]। इति।

(छ) प्रोषिते कालशेषः स्यादशेषे त्र्यहमेव तु।
सर्वेषां वत्सरे पूर्णे प्रेते दत्त्वोदकं शुचिः[७]।।इति।

(ज) निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः[८]।।इति।

---

१. वासिष्ठधर्मशास्त्रे-४।३६; २. गौतमप्रणीतधर्मसूत्रे-२।५।१७।

३. विष्णुस्मृतौ (विष्णुधर्मसूत्रे)-२२।४०; ४. मनुस्मृतौ-५।७६।

५. शङ्खस्मृतौ-१५।१२, अग्निपुराणे-१५७।१३-१४, १५८।३२-३३; विष्णुधर्मोत्तरपुराणे च-२।७५।१७।

६. याज्ञवल्क्यस्मृतौ-३।२१।

७. याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायां प्रदर्शितं पाठान्तरम्-३।२१।

८. मनुस्मृतौ-५।७७।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

(झ) अत्रिपक्षात् त्रिरात्रं स्यात् षण्मासात् पक्षिणी तथा ।
परमेकाहमावर्षादूर्ध्वं स्नात्वा विशुध्यति[१] ।।इति।

(ञ) मासत्रये त्रिरात्रं स्यात् षण्मासेन तु पक्षिणी ।
अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यति[२] ।।इति।

(ट) अतीते सूतके स्वे स्वे त्रिरात्रं स्यादशौचकम् ।
संवत्सरे व्यतीते तु सद्यःशौचं विधीयते[३] ।।इति।

(ठ) अतीते सूतके प्रोक्तं सपिण्डानां त्रिरात्रकम् ।
तथैव मरणे स्नानमूर्ध्वं संवत्सराद् यदि[४] ।।इति।

(ड) मासत्रये त्रिरात्रं स्यात् षण्मासेन तु पक्षिणी ।
अहः संवत्सरादर्वाक् पूर्णे दत्त्वोदकं शुचिः[५] ।।इति।

(ढ) अर्वाक् त्रिपक्षात् त्रिनिशं षण्मासाच्च दिवानिशम् ।
अहः संवत्सरादर्वाग् देशान्तरमृतेष्वपि[६] ।।इति।

(ण) अतीते दशरात्रे तु वर्षस्याभ्यन्तरे तथा ।
त्रिरात्राच्छुद्धिरुद्दिष्टा स्नातस्य तु ततः परम्[७] ।।इति।

(त) अतिक्रान्ते दशाहे तु पश्चाज्जानाति चेद् गृही ।
त्रिरात्रं सूतकं तस्य न तद्द्रव्यस्य कर्हिचित्[८] ।।इति।

(थ) आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् ।
समाप्ते तूदकं दत्त्वा त्रिरात्रमशुचिर्भवेत्[९] ।।इति च।

---

१. देवलवचनम्, माधवाचार्यकृतपराशरस्मृतिव्याख्यायाम्-३।१०-११, प्रथमे भागे, पृ. ५९८।
२. वृद्धवसिष्ठवचनम्, याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।२१, निर्णयसिन्धौ च, पृ. ३७८।
३. जाबालिवचनम्, स्मृतिचन्द्रिकायाम्, आशौचकाण्डे, पृ.४९।
४. कूर्मपुराणे, काशिराजन्याससंस्करणे-२।२३।२६।
५. गरुडपुराणे, नागप्रकाशकेन पुनर्मुद्रिते-२।३४।६६।
६. विष्णुवचनम्, माधवाचार्यकृतपराशरस्मृतिव्याख्यायाम्, प्रथमे भागे, पृ. ५९८।
७. विष्णुधर्मोत्तरपुराणे, नागप्रकाशकेन पुनर्मुद्रिते-३।२३२।५।
८. स्मृत्यन्तरवचनम्, याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।१७।
९. मनुस्मृतौ-५।८८।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

उपरि लिखितानां वचनानां विचारे संवत्सरादूर्ध्वं स्नानमात्रेण शुद्धिरित्यत्र प्राय: सर्वेषां वचनानां सम्मतेर्दर्शनात् पारस्करस्य वचनं संवत्सरान्त:कालविषयकं प्रतीयते; किन्तु "प्रोषिते कालशेष: स्यात् पूर्णे दत्त्वोदकं शुचि:"[१] इति याज्ञवल्क्यस्मृतिवचने संवत्सरादर्वागपि स्नानेनोदकदानेनैव शुद्धे: प्रतिपादितत्वात् तस्या व्यवस्थायाश्च बैजवापादिशाखान्तरमूलकताया: सम्भाव्यमानत्वाद् एतस्मिन् विषयेऽपि प्रतिशाखं भिन्नाया व्यवस्थाया: स्वीकार्यत्वात् पारस्करसम्प्रदाये अतिक्रान्तस्य सपिण्डाद्याशौचस्य संवत्सरादर्वागूर्ध्वं च यदा कदाऽपि श्रवणे यथायथमेकरात्रं त्रिरात्रं वा पालनीयत्वमित्यपि वक्तुं शक्यमेव। वस्तुत: शब्दप्रमाणकेऽर्थे श्रुतस्य शब्दस्यैवार्थस्य स्वीकार्यत्वात् पारस्करवचने च संवत्सरादर्वागूर्ध्वं वेति चाऽश्रूयमाणत्वादयमेव द्वितीय: पक्ष: स्वीकार्योऽवगन्तव्य:। यद्यप्युक्तस्य याज्ञवल्क्यस्मृतिवचनस्य विज्ञानेश्वरेण "प्रोषिते कालशेष: स्यादशेषे त्र्यहमेव तु। सर्वेषां वत्सरे पूर्णे प्रेते दत्त्वोदकं शुचि:" इति पाठान्तरं प्रदर्शितमस्ति, तथापि तस्य पाठान्तरस्य विश्वरूपेणाऽनुल्लिखितत्वात्, विज्ञानेश्वरेणाऽपि मूले स्वीकृतस्य पाठस्य पाठान्तरस्य च मध्ये कतरस्य परिग्राह्यत्वमित्यनिर्णीतत्वात्, मूले स्वीकृतस्य पाठस्याऽर्थस्य मनुस्मृतावपि "निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च। सवासा जलमाप्लुत्य सद्य एव विशुध्यति"[२] इति वैकल्पिकरूपेण स्वीकृतेरवगम्यमानत्वात्, एतस्य मनुस्मृतिवचनस्य याज्ञवल्क्यस्मृतिमूलपाठस्थस्योक्तस्य वचनस्य समर्थने विज्ञानेश्वरेणाऽपि प्रस्तुतत्वात्, उक्तस्य मनुस्मृतिवचनस्याङ्गस्पर्शनमात्रार्थकशुद्धिविषयतया कृतस्य कुल्लूकभट्टव्याख्यानस्याऽसङ्गतत्वेनाऽस्वीकार्यत्वात्, अर्वाचीनैर्धर्मशास्त्रव्याख्याकारैर्धर्मशास्त्रनिबन्धकारैश्च कृतानां धर्मशास्त्रवचनपदवाक्यप्रकरणस्वारस्यप्रतिकूलानां धर्मशास्त्रवचनार्थानां तै: प्रदर्शितानां धर्मशास्त्रमूलग्रन्थस्थवचनपदवाक्यप्रकरणस्वारस्यविरुद्धानां व्यवस्थानां चाऽस्वीकार्यत्वात्, शब्दप्रमाणकेऽर्थे धर्मशास्त्रमूलग्रन्थस्थवचनविशेषपदवाक्यप्रकरणस्वारस्याऽनुकूलानामेवार्थानां व्यवस्थानां च स्वीकार्यत्वात्, "ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रमाशौचम्, सद्य: शौचमिति गौतम:"[३] इत्यादिषु वचनेषु यस्मिन् विषये वासिष्ठधर्मशास्त्रकारस्य सम्प्रदाये सपिण्डानां त्रिरात्रमाशौचं सर्वथा तस्मिन्नेव विषये गौतमसम्प्रदाये

---

१. याज्ञवल्क्यस्मृतौ-३।२१; २. मनुस्मृतौ-५।७७।
३. वासिष्ठधर्मशास्त्रे-४।३४-३५।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

सपिण्डानां सद्यः शौचमित्यर्थस्य स्वीकार्यत्वात्, "उदिते जुहोति"[१] "अनुदिते जुहोति"[२] इत्यादिषु वचनेषु दृष्टानां सर्वेषां पक्षाणामधिकारिविशेषविषयतया धर्मत्वमास्थेयमिति। "श्रुतिद्वैधं तु यत्र स्यात् तत्र धर्मावुभौ स्मृतौ। उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः।। उदितेऽनुदिते चैव समयाध्युषिते तथा। सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः"[३] इति मनुस्मृतिवचनादवगम्यमानत्वात् तत्तच्छाखाध्यायिनां जनानां कृते तत्तच्छाखाध्यायिपरिगृहीतगृह्यसूत्रधर्मसूत्र-ग्रन्थविहितानां विभिन्नानामेव आशौचव्यवस्थानामनुसरणीयत्वाच्च याज्ञवल्क्यस्मृतेः "प्रोषिते कालशेषः स्यात् पूर्णे दत्त्वोदकं शुचिः"[४] इति विश्वरूपविज्ञानेश्वरोभयस्वीकृतस्य मुख्यस्य पाठस्याऽपि सूब्ज एवार्थः स्वीकार्योऽवगम्यते। तेनैव न्यायेन पारस्करस्य "अतीतश्चेदेकरात्रं त्रिरात्रं वा"[५] इति सूत्रस्यार्थोऽपि अस्मदुक्तरूप एव स्वीकर्तव्यो व्यवहारेऽनुसर्तव्यश्च पारस्करानुयायिभिरित्यवसीयते।

सपिण्डाऽऽचार्य-मातामहानां मातामह्या उपनीताया अप्रत्तायाः सपिण्डकन्यायाश्च मरणेन जातमाशौचं विहायाऽन्येषां मरणेन जाते आशौचे त्वतीते सति किमप्याशौचं न भवतीति पारस्करगृह्यसूत्रोदककर्मप्रकरणपर्यालोचनादपि बोद्धुं शक्यमस्ति, ऋत्विगादीनामनतिक्रान्तस्याऽप्याशौचस्य ऐच्छिकतायाः "अथ कामोदकान्यृत्विक्श्वशुरसखिसम्बन्धिमातुलभागिनेयानाम्, प्रत्तानां च"[६] इति पारस्करवचनाद् अवगम्यमानत्वात्। एतस्मिन् विषये धर्मसिन्धुकारेणापि "मृताशौचेऽपि अनुपनीतमरणादिनिमित्तेषु त्रिरात्रैकरात्रेषु मातुलादिपरगोत्रीय-मरणनिमित्तकेषु पक्षिणीत्रिरात्रादिषु चातिक्रान्ताशौचं नास्ति"[७] इति स्फुटतयोक्तमस्ति।

---

१. "उषस्युपोदयं समयाविषिते उदिते वा प्रातः (होतव्यम्)" इति आपस्तम्बश्रौतसूत्रे-६।१।४।१, द्र. सत्याषाढश्रौतसूत्रे-३।७, भारद्वाजश्रौतसूत्रे-६।१।७-१०, वैखानसश्रौतसूत्रे-२।२, शाङ्खायनश्रौतसूत्रे-२।७।१-५, आश्वलायनश्रौतसूत्रे च-२।४।२४।

२. "प्रातर्जुहोत्यनुदिते" इति कात्यायनश्रौतसूत्रे (४।१५१), सायं तु "अस्तमिते जुहोति" (४।१४।६) इति तत्र प्रतिपादितम्। "श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति" इत्यादिकं वचनं च न्यायभाष्ये (२।१।५८,६०) दृश्यते। द्र. जैमिनीयधर्ममीमांसा-शाबरभाष्यम्-५।१।३३, २।४।१।

३. मनुस्मृतौ-२।१४-१५;

४. याज्ञवल्क्यस्मृतौ-३।२१।

५. पारस्करगृह्यसूत्रे-३।१०।४५;

६. पारस्करगृह्यसूत्रे-३।१०।४६-४७।

७. धर्मसिन्धौ, निर्णयसागरमुद्रायन्त्रालये १९०४ तमे क्रैस्ताब्दे मुद्रिते द्वितीयावृत्तिके, पृ. ३२७।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**असवर्णसपिण्डाशौचविचारः**

पारस्करगृह्यसूत्रे असवर्णसपिण्डाशौचविषये स्पष्टं वचनं किमपि न दृश्यते। एतस्मिन् विषये ग्रन्थान्तरेषु तु विविधा व्यवस्था दृश्यन्ते। तथा हि—

(क) वर्णानामानुलोम्येन स्त्रीणामेको यदा पतिः ।
दशाहषट्त्र्यहैकाहं प्रसवे सूतकं भवेत्[१] ।।इति।

(ख) हीनवर्णानामधिकवर्णेषु सपिण्डेषु तदशौचव्यपगमे शुद्धिः, ब्राह्मणस्य क्षत्रविट्शूद्रेषु सपिण्डेषु षड्रात्रत्रिरात्रैकरात्रैः, क्षत्रियस्य विट्शूद्रयोः, षड्रात्रत्रिरात्राभ्याम्, वैश्यस्य शूद्रेषु षड्रात्रेण[२] ।। इति।

(ग) षड्भिस्त्रिभिरथैकेन क्षत्रविट्शूद्रयोनिषु ।
ब्राह्मणः शुद्धिमाप्नोति क्षत्रियस्तु तथैव च[३] ।।इति।

(घ) क्षत्रविट्शूद्रदायादा ये स्युर्विप्रस्य बान्धवाः ।
तेषामशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते[४] ।। इति।

(ङ) सर्वे तूत्तरवर्णानामशौचं कुर्युरादृताः ।
तद्वर्णविधिदृष्टेन स्वं तु शौचं स्वयोनिषु[५] ।।इति।

(च) सर्वेषामेव वर्णानां सूतके मृतके तथा ।
दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवीत्[६] ।।इति च।

तत्र पारस्करमते तु विशेषस्याऽनुक्तत्वाद् असवर्णेऽपि वैधविवाहजाते सपिण्डे मृते स्वस्ववर्णोक्तमेवाशौचं कर्तव्यमिति गम्यते, अस्य पक्षस्याऽपि ग्रन्थान्तरप्रदर्शितपक्षान्तराणामिव[७] पारस्करवचनस्वारस्यादनुसरणीयतायाः स्वीकर्तुं शक्यत्वात्, आशौचपालकस्थवर्णविशेषगतवैशिष्ट्यकृतचित्तशुद्ध्यादितारतम्य-मूलकस्य आशौचावधिविशेषस्य वैधविवाहजाताऽसवर्णसपिण्डमरणकृता-शौचविषयेऽपि योजनेऽनौचित्यस्याऽभावाच्च।

---

१. दक्षस्मृतौ, आनन्दाश्रममुद्रिते स्मृतीनां समुच्चये सङ्गृहीतायाम्-६।१२।
२. विष्णुस्मृतौ-२२।२१-२४।
३. अग्निपुराणे, नागप्रकाशकेन १९८५ तमे क्रैस्ताब्दे पुनर्मुद्रिते-१५७।३-४।
४. कूर्मपुराणे, काशिराजन्याससंस्करणे-२।२३।३९; ५. तत्रैव-२।२३।४१।
६. अङ्गिरोवचनम्, याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।२२।
७. पक्षान्तराणि तद्व्याख्यानानि च द्रष्टव्यानि वीरमित्रोदये शुद्धिप्रकाशे वाराणसीसंस्करणे, पृ. ४५-४८।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**आशौचसम्पातविचारः**

कर्कोपाध्यायादिव्याख्यागतानुगतिकतां परित्यज्य पारस्करगृह्यसूत्रस्थाऽऽशौचप्रकरणस्य सम्यग् विवेचने कृते आशौचसम्पातविषये तु पारस्करगृह्यसूत्रे किमपि विशिष्टं विधानं नोपलभ्यते। ग्रन्थान्तरेषु त्वाशौचसम्पातविषयकाणि विविधानि वचनानि दृश्यन्ते। तथा हि—

(क) तच्चेदन्तः पुनरापतेच्छेषेण शुध्येरन्, रात्रिशेषे द्वाभ्याम्, प्रभाते तिसृभिः[१]। इति।

(ख) अथ चेदन्तरा प्रमीयेत जायेत वा शिष्टैरेव दिवसैः शुध्येत्, अहःशेषे द्वाभ्याम्, प्रभाते तिसृभिः[२]। इति।

(ग) जननमरणयोस्सन्निपाते समानो दशरात्रः। अथ यदि दशरात्रास्सन्निपतेयुराद्यं दशरात्रमाशौचमा नवमाद् दिवसात्[३]। इति।

(घ) जननाऽऽशौचमध्ये यद्यपरं जननाशौचं स्यात्, तदा पूर्वाशौचव्यपगमे शुद्धिः, रात्रिशेषे दिनद्वयेन, प्रभाते दिनत्रयेण, मरणाशौचमध्ये ज्ञातिमरणेऽप्येवम्[४]। इति।

(ङ) जन्ममरणयोस्तुल्योपनिपातश्चेत्तदा त्रिरात्रशेषणात् पूर्वेणैव शुद्धिः, न्यूने त्रिरात्रपूरणम्, पुरोदयादन्त्ये त्रिरात्रम्, उदिते तु यथोक्तम्[५]। इति।

(च) अन्दर्दशाहे स्यातां चेत् पुनर्मरणजन्मनी।
तावत् स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशम्[६]॥इति।

(छ) अन्तरा तु दशाहस्य पुनर्मरणजन्मनी।
तावत्स्यादशुचिर्विप्रो यावत्पूर्वं न गच्छति[७]॥इति।

---

१. वासिष्ठधर्मशास्त्रे-४।२४-२६, गौतमप्रणीतधर्मसूत्रे च-२।५।५-७।

२. शङ्खलिखितवचनम्, पराशरस्मृतिव्याख्यायां माधवकृतायाम्, १९७४ तमे क्रैस्ताब्दे कालीघट्टनगरे मुद्रितायाम्, प्रथमे भागे, पृ. ६२४।

३. बौधायनधर्मसूत्रे-१।११।१५-१६।

४. विष्णुस्मृतौ (विष्णुधर्मसूत्रे)-२२।३५-३८।

५. स्मृत्यन्तरवचनम्, याज्ञवल्क्यस्मृतिव्याख्यायां बालक्रीडायाम्-३।१९-२०।

६. मनुस्मृतौ ५।७९, गरुडपुराणे च-२।३९।१२।

७. पराशरस्मृतौ-३।३०।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

(ज) सपिण्डानां सपिण्डस्तु मृतेऽन्यस्मिन् मृतो यदि ।
पूर्वाशौचसमाख्यातैः कार्यास्त्वत्र दिनैः क्रियाः[१] ।।इति।

(झ) आद्यं भागद्वयं यावत् सूतकस्य तु सूतकम् ।
द्वितीयं पतति त्वाद्यात् सूतकाच्छुद्धिरिष्यते ।।
अत ऊर्ध्वं द्वितीयात्तु सूतकान्ताच्छुचिः स्मृतः ।
एवमेव विचार्य स्यान्मृतके मृतकान्तरम्[२] ।।इति।

(ञ) समानं खल्वशौचं तु प्रथमेन समापयेत् ।
असमानं द्वितीयेन धर्मराजवचो यथा[३] ।।इति।

(ट) स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद् यदि ।
न पूर्वेण विशुद्धिः स्यात् स्वकालेनैव शुध्यति[४] ।।इति।

(ठ) यदि स्यात् सूतके सूतिर्मरणे वा मृतिर्भवेत् ।
शेषेणैव भवेच्छुद्धिरहश्शेषे त्रिरात्रकम्[५] ।।इति।

(ड) सूतके मृतकं चेत् स्यान्मृतके त्वथ सूतकम् ।
तत्राऽधिकृत्य मृतकं शौचं कुर्यान्न सूतकम्[६] ।।इति।

(ढ) शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् ।
शावेन शुध्यते सूतिर्न सूतिः शावशोधिनी[७] ।।इति।

(ण) मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता ।
पितुः शेषेण शुद्धिः स्यान्मातुः कार्या तु पक्षिणी[८] ।।इति।

---

१. मार्कण्डेयपुराणे जीवानन्दसंस्करणे-३५।४७।
२. ब्रह्मपुराणवचनम्, निर्णयसिन्धौ, निर्णयसागरमुद्रिते पञ्चमे संस्करणे, पृ. ३८१।
३. शङ्खस्मृतौ, आनन्दाश्रममुद्रिते स्मृतीनां समुच्चये समाविष्टायाम्-१५।१०।
४. उशनसो वचनम्, याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।२०।
५. कूर्मपुराणे काशिराजन्याससंस्करणे-२।२३।२२।
६. अङ्गिरसो वचनम्, याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।२०।
७. षट्त्रिंशन्मतवचनम्, तत्रैव।
८. स्मृत्यन्तरवचनम्, मिताक्षरायाम् (३।२०), शङ्खस्मृतिवचनम्, अपरार्कव्याख्यायाम् (३।२०), हारलतायाम् (पृ. ६५), पराशरस्मृतिव्याख्यायां माधवकृतायाम् (३।२८-२९, पृ. ६२५), निर्णयसिन्धौ च (पृ. ३८१)। द्रष्टव्यं च वैष्णववसिष्ठस्मृतिवचनम् ६।४४३, दाल्भ्यस्मृतिवचनं च, श्लो. १२६ स्मृतिसन्दर्भे।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

(त) सपिण्डानां तु यः कश्चिद् वहेताऽथ दहेत वा।
तस्याऽऽशौचं दशाहं तु नाऽन्याशौचेन शुध्यति[१] ।।इति।

(थ) पूर्वाशौचेन या शुद्धिः सूतके मृतके च सा।
सूतिकामग्निदं हित्वा प्रेतस्य च सुतानपि[२] ।।इति।

(द) अन्तर्दशाहे जननात् पश्चाच्चेन्मरणं यदि।
प्रेतमुद्दिश्य कर्तव्यं पिण्डदानं स्वबन्धुभिः ।।
प्रारब्धे प्रेतपिण्डे तु मध्ये चेज्जननं भवेत्।
तथैवाऽऽशौचपिण्डाँस्तु शेषान् दद्याद् यथाविधि[३]।। इति च।

उक्तेषु वचनेषु सत्सु याज्ञवल्क्यस्मृतेः शाखान्तरग्रन्थमूलकतया सम्भाविते "अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यति"[४] इति वचने च सत्यपि पारस्करगृह्यसूत्रमेव सर्वथाऽवलम्ब्य सन्निपतितस्य द्वितीयस्याऽऽशौचस्याऽपि स्वाभाविकरूपेण समाप्तावेव शुद्धिः स्वीकर्तव्या प्रतीयते; पूर्वाशौचस्य कियति कालेऽवशिष्टे सन्निपतितं द्वितीयमाशौचं पूर्वाशौचगमन एव गच्छतीति विषये ग्रन्थान्तरेष्वपि विभिन्नानां मतानां दर्शनात् तेषां सापवादत्वस्य स्वीक्रियमाणत्वाच्च पारस्करमते स्वकालेनाऽनतीतं द्वितीयाशौचं प्रथमाशौचेन नैव गच्छतीति सिद्धान्तस्याऽपि स्वीकर्तुं शक्यत्वस्य सम्भावितत्वात्। एवञ्च माध्यन्दिनीय-वाजसनेयि-शुक्लयजुर्वेदशाखाध्यायिभिः पारस्करानुयायिभिर्द्विजोत्तमैराशौचसम्पात-विषयेऽपि स्वशाखागृह्यसूत्राद् योऽर्थोऽवगम्यते स एवाऽनुष्ठेयोऽवसीयते।

**पारस्करोक्ताया आशौचव्यवस्थायाः सदाचारिजनविषयत्वम्**

पारस्करोक्ताऽऽशौचव्यवस्था सदाचारिणां बन्धूनां कृतेऽस्तीति ग्रन्थस्वारस्यादेवाऽवगम्यते। एतच्च क्वचित् स्मृतौ पुराणेषु च स्फुटीकृतमपि दृश्यते। तथा हि—

(क) सतामेव हि बन्धूनां कर्म कुर्यात् प्रयत्नतः।
भ्रष्टानामपि तुच्छानां पतितानां विकर्मिणाम् ।।

---

१. शातातपवचनम्, षडशीतिव्याख्यायां शुद्धिचन्द्रिकायाम्, श्लो. २२, पृ. ३०।

२. षडशीतौ, श्लो. २२।

३. शातातपवचनम्, याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।२०।

४. याज्ञवल्क्यस्मृतौ-३।२०; द्र. गरुडपुराणे-१।१०६।१५।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

न कुर्वीत क्रियां यत्नादपि स्नानं समाचरेत् ।
असतां पतितानां च भस्मान्तं सूतकं स्मृतम्[१] ।।इति।

(ख) नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् ।
नाऽऽशौचं कीर्त्यते सद्भिः पतिते च तथा मृते[२] ।।इति।

(ग) पतितानां तु यद् दत्तं श्राद्धं चाथ जलाञ्जलिः ।
न तत् प्रेतः समाप्नोति गगने प्रविलीयते[३] ।।इति।

(घ) अशुद्धेन तु यद् दत्तमुद्दिश्याऽशुद्धमेव च ।
नोपतिष्ठति तत् सर्वमन्तरिक्षे विनश्यति[४] ।।इति।

(ङ) महापातकिनो ये च तेभ्योऽपि च महत्तरः ।
पापकृन्नास्तिको लोके तस्मात्तं परिवर्जयेत्[५] ।।इति च।

**महागुरुमरणाशौचनिरूपणम्**

महागुरूणां मातापित्राचार्यपतीनां मरणे कियत्कालमाशौचं भवतीति विषये शाखान्तरगृह्यसूत्र-पितृमेधसूत्र-लघुस्मृतिपुराणेषु विशेषेणोक्तमपि दृश्यते। तथा हि–

(क) द्वादशरात्रं वा महागुरुषु दानाध्ययने वर्जयेरन्, दशाहं सपिण्डेषु, गुरौ सपिण्डे, अप्रत्तासु च स्त्रीषु; त्रिरात्रमितरेष्वाचार्येषु, ज्ञातौ चाऽसपिण्डे, प्रत्तासु च स्त्रीषु, अदन्तजाते, अपरिजाते च; एकाहं सब्रह्मचारिणि, समानग्रामीये च श्रोत्रिये[६]। इति।

(ख) मातरि पितर्याचार्य इति त्रिरात्रमक्षारलवणभोजनमधःशयनं ब्रह्मचर्यम्, त्र्यहं षडहं द्वादशाहं संवत्सरं वा यावद्ग्रहणं द्वादशाहावरार्ध्यं परमगुरुषु, एवमघोदकम्, इतरेषु त्रिरात्रम्, यावज्जीवं प्रेतपत्नी[७]। इति।

---

१. आङ्गिरसस्मृतौ, श्लो. १३७-१३९, स्मृतिसन्दर्भे पञ्चमे भागे, पृ. २९६३।
२. कूर्मपुराणे, काशिराजन्याससंस्करणे-२।२३।७१।
३. विष्णुधर्मोत्तरपुराणे, नागप्रकाशकेन पुनर्मुद्रिते-२।७६।१८-१९।
४. गरुडपुराणे, नागप्रकाशकेन पुनर्मुद्रिते-२।४।१५।
५. विष्णुधर्मोत्तरपुराणे, नागप्रकाशकेन पुनर्मुद्रिते-२।५१।११।
६. आश्वलायनगृह्यसूत्रे, १९८० तमे क्रैस्ताब्दे अड्यारपुस्तकालयेन मुद्रापिते-४।३।१५-२५।
७. बौधायनपितृमेधसूत्रे १९८२ तमे क्रैस्ताब्दे देहल्यां पुनर्मुद्रिते बौधायनगृह्यसूत्रे संलग्ने १।१२।१०।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

(ग) मातरि पितर्याचार्य इति द्वादशाहाः, तेषु चोदकोपस्पर्शनं तावन्तं कालम्[१]। इति च।

पारस्करगृह्यसूत्रे तूदककर्मप्रकरणे महागुरुमरणाशौचविषये तादृशं किमपि विशिष्टं प्रतिपादनं नोपलभ्यते। ततश्च पारस्करमते महागुरूणामाशौचमप्यन्येषां सपिण्डानामाशौचेन तुल्यमेव स्यादित्यापाततः प्रतीयते, कर्कोपाध्यायादिभिरपि एतस्मिन् विषये तत्र विचारः कृतो नोपलभ्यते तथापि अनध्यायप्रकरणे स्थिताद् "गुरौ प्रेतेऽपोऽभ्यवेयात्, दशरात्रं चोपरमेत्"[२] इति पारस्करवचनस्य दर्शनात्, तत्राऽऽचार्यशब्दस्योपाध्यायशब्दस्य च प्रयोगमकृत्वा गुरुशब्दस्य प्रयुक्तत्वात्, तत्र विशिष्टस्याऽभिप्रायस्य निहितताया अवगम्यमानत्वेन तत्र गुरुशब्देन न केवलमाचार्यस्योपाध्यायस्य वा ग्रहणं कार्यमपि तु पितुः, मातुः, पत्युश्च ग्रहणं कार्यमित्यवसीयते। तत्राऽनध्यायप्रकरणेऽपि "अपोऽभ्यवेयात्" इत्युदककर्मणोऽपि सूचितत्वाच्च पारस्करसम्प्रदायेऽपि पितुर्मातुः पत्युश्च मरणे गुणिनाम-गुणानां च सर्वेषां द्विजोत्तमानां दशरात्रमेवाऽऽशौचमित्यवगम्यते। यद्यप्येष विषय उदककर्मकण्डिकायामेव प्रतिपादयितुमुचितस्तथाप्येतस्य विषयस्य प्रसङ्गप्राप्तत्वादनध्यायप्रकरण एव प्रतिपादितत्वादेतस्य विषयस्य उदककर्मकण्डिकायां पुनरुक्तिर्न कृतेत्यवगम्यते। अथवा उदककर्मकण्डिकायां विहिताऽतिक्रान्ताशौचव्यवस्था महागुरुविषयेऽवस्थाविशेषे न प्रवर्तत इति प्रतिपादनायापि तथा कृतं स्यादिति सम्भाव्यते। दृश्यते हि क्वचिद् और्ध्वदेहिककर्मणः कर्तुरन्यस्याऽभावेन तस्याऽकृतत्वे पित्रादीनामाशौचे स्वल्पेन प्रभूतेन वाऽपि कालेनाऽतिक्रान्तेऽपि और्ध्वदेहिकक्रियायाः कर्तॄणां पुत्रादीनां कृते पित्रादीनामाशौचं दशरात्रमेव भवतीति स्पष्टं वचनम्। तथा हि—

निर्दशे गुरुपाते च कृते चैवौर्ध्वदेहिके।
ऊर्ध्वं त्रिरात्रमाशौचं दशाहमकृतक्रिये[३] ।।इति।

वस्तुतस्तु "पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः। श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत्"[४] इति पैठीनसिवचनमपि

---

१. आपस्तम्बधर्मसूत्रे १९६९ तमे क्रैस्ताब्दे वाराणस्यां मुद्रिते-१।३।२।४-५।
२. पारस्करगृह्यसूत्रे-२।११।७।
३. दाल्भ्यस्मृतौ, श्लो. १४२, स्मृतिसन्दर्भे मनसुखरायमोरप्रकाशिते, पञ्चमे भागे, पृ. २९४६।
४. याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।२१।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अकृतक्रियगुरुपातविषयमेवाऽवगम्यते। "महागुरुनिपाते तु आर्द्रवस्त्रोपवासिना। अतीतेऽब्देऽपि कर्तव्यं प्रेतकार्यं यथाविधि"[१] इति दक्षवचनमपि उक्तविधेऽर्थ एवाऽनुकूलं प्रतीयते। अत एव एतस्मिन् विषये "ऊर्ध्वं संवत्सरादाद्याद् बन्धुश्चेच्छ्रूयते मृतः। भवेदेकाहमेवाऽत्र तच्च सन्न्यासिनां न तु।" इति देवलोक्तेः पित्रोरब्दमध्ये त्रिरात्रमूर्ध्वमेकाहः, बन्धुर्माता पिता भर्ता च, पूर्वोक्तदशाहस्तु कलिङ्गादिदेशपरः" इति शुद्धितत्त्वकारादयो गौडा वदन्तीत्यादिको निर्णयसिन्धौ[२] वीरमित्रोदये[३] च स्थित उल्लेखोऽपि परिशीलनीय एव दृश्यते। एतादृशमेव कञ्चन विशेषं सूचयितुमपि महागुरूणामाशौचं पारस्करगृह्यसूत्रे उदककर्मप्रकरणेऽ-प्रतिपाद्याऽनध्यायप्रकरणे प्रतिपादितं स्यादिति प्रतीयते। अत एवाऽयं विषयो गम्भीररूपेण विचारणीयोऽस्ति।

मनु-याज्ञवल्क्य-पराशरस्मृतिषु चैतस्य विषयस्य विशेषतः प्रतिपादनं कृतं नोपलभ्यते। गुरुकुले स्थितस्य ब्रह्मचारिणः कृते अध्यापनं कुर्वत आचार्यस्य मरणे दशरात्रमाशौचं भवति, समावृत्तस्य शिष्यस्य कृते तदानीम् अध्यापनमकुर्वत आचार्यस्य मरणे त्वाशौचमन्येषां सपिण्डानां यादृशमाशौचं तादृशमेव भवतीति प्रतिपादयितुमाचार्यस्य मरणे त्वाशौचमुदककर्मकण्डिकायां पुनः प्रतिपादित-मवगम्यते। क्षत्रिय-वैश्य-शूद्राणां कृते तु पितुः, मातुः, पत्युश्च मुख्यमाशौचमन्येषां सपिण्डानामाशौचेन तुल्यमेव भवतीति च पारस्करगृह्यसूत्रादेवाऽवगम्यते। ब्राह्मणानां कृते महागुरुमरणाशौचविषये पारस्करगृह्यसूत्रे प्रतिपादिताया व्यवस्थाया विवेचनात्मकस्य प्रतिपादनस्याऽकरणं कर्कोपाध्यायादीनां पारस्करगृह्यसूत्रस्य व्याख्यातॄणामेतस्मिन् विषये विवेकस्य शैथिल्यमेव प्रकटयति। अनुस्मृति-पुराणादिवचनानामेवाऽनुगमनं कृत्वा व्याख्यातव्यपारस्करगृह्यसूत्रस्थसम्बद्धप्रकरणानां गम्भीरमनुशीलनमकृत्वैव पारस्करगृह्यसूत्रोदककर्मकण्डिकाया व्याख्याने प्रवृत्तत्वात् पारस्करोक्तमहागुरुमरणाशौचव्यवस्थाया विवेचने तेषामेतच्छैथिल्यं जातमवगम्यते।

पारस्करगृह्यसूत्रे आशौचिभिः पालनीयानां नियमानां पिण्डदानादीनां च प्रतिपादकेषु सूत्रेषु बहुवचनान्तानां क्रियापदानां प्रयोगे दृश्यमानेऽपि ब्राह्मणे[४] श्रौतसूत्रे[५] च और्ध्वदेहिककर्मणि मुख्यः कर्ता पुत्रो वा भ्राता वाऽन्यो वा कोऽपि

---

१. याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।२१।

२. निर्णयसिन्धौ, निर्णयसागरमुद्रिते, पञ्चमे संस्करणे, पृ. ३७८।

३. वीरमित्रोदये, शुद्धिप्रकाशे, वाराणस्यां मुद्रिते, पृ.४९-५०।

४. माध्यन्दिनीय-वाजसनेयि-शतपथब्राह्मणे-१२।५।२।१५।

५. कात्यायनश्रौतसूत्रे-२५।७।३८।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

ब्राह्मणो भवतीति प्रतिपादितत्वान्माध्यन्दिनीय-वाजसनेयि-शुक्लयजुर्वेद-शाखाध्यायिनामौर्ध्वदेहिककर्मण: कर्ता एक एव भवति, अन्ये तु सहायका एव भवन्ति, पिण्डदानादिकमन्ये नैव कुर्वन्ति, स्नानकाले यावदाशौचं प्रेतायोदकस्य दानं तु कुर्वन्तीति चाऽवगन्तव्यम्। एवं चाऽऽशौचिनियमा अपि कर्त्रैव विशेषत: पालनीया इत्यपि बोध्यम्। एते च विशेषत: परिपाल्या आशौचिनियमा: कर्त्राऽपि दशरात्रमेव पालनीया इति प्रकरणपर्यालोचनादेवाऽवगम्यते। एकादशे तु दिवसे तेषां दानाध्ययनादिवर्जननियमानां निवृत्तिर्भवति। एतस्मिन् विषयेऽधोलिखितानि वचनानि च स्मरणीयानि—

(क) श्राद्धे प्रागेव कुर्वीत् वैश्वदेवं तु साग्निक: ।
एकादशाहिकं मुक्त्वा तत्र ह्यन्ते विधीयते[१]।। इति।

(ख) सम्प्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च ।
अग्रतो वैश्वदेव: स्यात् पश्चादेकादशेऽहनि[२]।। इति।

(ग) एकादशाहे पुत्रादे: कर्तुरपि पञ्चमहायज्ञाद्यधिकार:, सपिण्डानां दर्श-वार्षिकश्राद्धेष्वधिकार:,नान्दीश्राद्धमात्रं चतु:पुरुषसपिण्डै: सपिण्डी-करणात् प्राग् न कार्यम्[३]। इति।

(घ) एतद् गृहपतौ प्रेते कुर्यादेकादशेऽहनि ।
प्रागेवैकादशश्राद्धाद् वृद्धिश्राद्धविवर्जितम्।।
एवं ज्येष्ठ: समादध्यात् कनीयांश्च विवर्जयेत् ।
एकादशेऽह्नि कुर्वन्ति द्वादशे वा विचक्षणा:[४]।। इति।

---

१. लघुयज्ञपार्श्वपरिशिष्टे, हस्तलिखिते, श्लो. २७, शालङ्कायनवचनम्, चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये, पृ. ६१०, पारस्करगृह्यसूत्रगदाधरभाष्ये (२।९।१६), पदार्थक्रमे वैश्वदेवनिर्णये, भाष्यपञ्चकयुते संस्करणे, पृ. २६८, संस्कारगणपतौ, पृ. ८५७, निर्णयसिन्धौ, च पृ. ३२६।

२. परिशिष्टवचनम्, चतुर्वर्गचिन्तामणौ परिशेषखण्डे कालनिर्णये, पृ. ६०९, पारस्कर-गृह्यसूत्रगदाधरभाष्ये, २।९।१६, पृ. २६९, संस्कारगणपतौ, पृ. ८५७, निर्णयसिन्धौ च, पृ. ३२६।

३. धर्मसिन्धौ एकादशाहकृत्यनिरूपणप्रकरणे, १९०४ तमे क्रैस्ताब्दे निर्णयसागरमुद्रायन्त्रालये मुद्रिते द्वितीयावृत्तिके, पृ. ३५०।

४ रेणुदीक्षितकृतायां कातीयगृह्यकारिकायाम्, आधानकालनिरूपणे, श्लो. १७-१८, पृ. २६१; गदाधरभाष्ये भाष्यपञ्चकयुतपुस्तके, पृ. २३।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

(ङ) दशाहात्तु परं सम्यग् विप्रोऽधीयीत धर्मवित् ।
दानं च विधिना देयमशुभान्तकरं शुभम्[१] ।। इति।

(च) सन्ध्यापञ्चमहायज्ञान् नैत्यकं स्मृतिकर्म च ।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया[२] ।। इति।

(छ) उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते[३] ।। इति।

(ज) दशाहं ब्राह्मणस्तिष्ठेद् दानहोमविवर्जितः ।
क्षत्रियो द्वादशाहं च वैश्यो मासार्धमेव च ।।
शूद्रश्च मासमासीत नित्यकर्मविवर्जितः ।
ततः परं निजं कर्म कुर्युः सर्वे यथोचितम्[४] ।। इति।

(झ) दश-द्वादश-मासार्ध-मास-संख्यैर्दिनैर्गतैः ।
स्वाः स्वाः काले क्रियाः कुर्युः सर्वे वर्णा यथाविधि।।
इति[५] च।

एवञ्च शाखान्तरे महागुरुमरणाशौचेऽन्यथा व्यवस्थायां सत्यामपि पारस्करगृह्यसूत्रे दशरात्रमेव मुख्यमाशौचमिति व्यवस्थाया अवगम्यमानत्वात्, तदनुकूलानामन्येषां स्मृतिपुराणवचनानां च दृश्यमानत्वात्, माध्यन्दिनीय-वाजसनेयिशुक्लयजुर्वेदशाखाध्यायिभिः पारस्करविहितैव व्यवस्थाऽनुसरणीयेति बोद्धव्यम्।

पारस्करोक्ता महागुरुमरणाशौचव्यवस्थाऽपि सदाचारवन्महागुरुमरणविषयेति ग्रन्थस्वारस्यादेवाऽगम्यते। तथापि महागुरौ भ्रष्टे पतिते "वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे। पात्राणि तु दहेदग्नौ यजमाने वृथामृते[६]" इत्यादिकानां वचनानां

---

१. संवर्तस्मृतौ, श्लो. ४५, वीरमित्रोदये शुद्धिप्रकाशे वाराणस्यां मुद्रिते, पृ. ८८।
२. जाबालिवचनम्, वीरमित्रोदये शुद्धिप्रकाशे वाराणस्यां मुद्रिते, पृ. ४४,८३।
३. यमवचनम्,वीरमित्रोदये शुद्धिप्रकाशे, पृ. ८६।
४. ब्रह्मपुराणे, नागप्रकाशकेन पुनर्मुद्रिते ११३।१४७-१४९, मार्कण्डेयपुराणे जीवानन्दसंस्करणे च ३५।४०-४१।
५. ब्रह्मपुराणे ११३।१५८, मार्कण्डेयपुराणे ३५।५०, वामनपुराणे, नागप्रकाशकेन पुनर्मुद्रिते च १४।१०२।
६. याज्ञवल्क्यस्मृतिव्याख्यायां मिताक्षरायाम्-३।६।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

विषये चाऽपि कथञ्चित् प्रायश्चित्तपूर्वकं तस्य दहने और्ध्वदेहिककर्मणि च कृतेऽपि सपिण्डीकरणं तु न कार्यमिति व्यवस्था ''अभिशस्तपतितभ्रूणघ्नान् स्त्रीं च व्यभिचारिणीं नाऽतिदिशेत्''[१] इति बैजवापोक्ता दृश्यते। पतितादीनामभिशस्तानां पित्रादीनां सुब्रह्मण्याह्वानेऽपि नामग्रहणस्याऽकार्यत्वं केचिद् वैदिका वदन्ति, तथापि केचित्तु पतितस्यापि पितुः पतिताया अपि मातुश्च प्रायश्चित्तपूर्वकं दहनादिकं सपिण्डीकरणं च कार्यमिति वदन्ति। मार्कण्डेयस्मृतौ तु दुराचारस्य पतितस्य पितुर्मरणे पुत्रस्याप्याशौचमपि न भवतीति स्फुटतया प्रतिपादितं दृश्यते। तथा हि—

पुत्रस्य जननात् पश्चात् पिता दुर्बुद्धितो यदि।
चाण्डालो यवनो भिल्लो जायते स्वयमेव वा ।।
परपीडादिना वाऽपि बलाद् वा कामकारतः।
पूर्वजातस्तत्तनयो निर्दुष्टः सच्चरित्रकः ।।
तेन सद्भिर्वोपनीतो न सङ्कीर्णश्च कैरपि।
कृतनित्यक्रियः सम्यक् कृताध्ययनसत्क्रियः ।।
ततः परं मृतस्तातस्तादृशो यवनात्मकः।
मृतौ तस्यास्य पुत्रस्य नाऽऽशौचं नोदकक्रिया[२] ।। इति।

एतस्यैवार्थस्य सामान्यतया समर्थकं पुराणवचनं च दृश्यते। तथा हि—

पतितानां न दाहः स्यान्नाऽन्त्येष्टिर्नाऽस्थिसञ्चयः।
न चाऽश्रुपातपिण्डौ वा कार्यं श्राद्धादिकं क्वचित्[३] ।। इति।

पातित्यनिरूपकाणि वसिष्ठबौधायनापस्तम्बगौतमधर्मसूत्रमनुयाज्ञवल्क्य-पराशरादिस्मृत्यग्निपुराणादिपुराणवचनानि च विविधानि सन्त्येव, तथाप्यधोलिखितं वचनमपि विचार्यम्—

---

१. कृत्यकल्पतरौ चतुर्थे भागे श्राद्धकाण्डे, सपिण्डीकरणनिरूपणे, पृ. २५५।
२. मार्कण्डेयस्मृतौ, स्मृतिसन्दर्भे मनसुखरायमोरप्रकाशिते, षष्ठे भागे, पृ. १५६।
३. कूर्मपुराणे, काशिराजन्याससंस्करणे २।२३।७२, द्र.-निर्णयसिन्धौ स्थितं ब्रह्मपुराणवचनं च, पृ. ३८८।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

पातित्यं नाम तेषां तु पित्रादीनां प्रवच्म्यहम् ।
शूद्रैर्म्लेच्छैश्च चण्डालैः सम्प्रीत्या सह भोजनम्[१] ।। इति।

एवञ्च पारस्करगृह्यसूत्रविहिताशौचनिरूपणं यथामति कृतम् ।

एतस्य निबन्धस्य वैदिकशास्त्रीयपरम्पराप्राप्तवैधवेदाध्ययनादिव्यवस्थाभिज्ञैः स्वाध्यायभक्तैः श्रुति-स्मृति-पुराण-विशेषज्ञैर्धर्मकामैः शास्त्रधर्मरक्षणपराऽऽचरणै- र्विद्वद्भिर्द्विजोत्तमैः सम्यगाकलनं कार्यम्। अत्र किमपि प्रामादिकं प्रतिपादनं वस्तुतोऽस्ति चेत् परया कृपया तदपि प्रमार्जनीयमिति शम् ।



१. लौगाक्षिस्मृतौ, स्मृतिसन्दर्भे, मनसुखरायमोरप्रकाशिते, षष्ठे भागे, पृ. ३८९।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# न धातुलोप आर्धधातुके

**पण्डितश्रीमनुदेवभट्टाचार्यः**
उपाचार्यः, व्याकरणविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी



नानादिग्गतशुभ्रकीर्तिपटलीगोपाङ्गनालङ्कृतं
विश्वस्मिन् सुमनोमनोज्ञहृदयाम्भोजव्रजैकार्चितम् ।
आम्नायादिसमस्तशास्त्रविगलत्पीयूषयूषास्पदं
गोपीनाथमहो महोविलसितं वन्दामहेऽहर्निशम् ।।

अथेह 'न धातुलोप आर्धधातुके'[१] इति सूत्रमनुसृत्य किञ्चिदकिञ्चित्कर-मुपाचरामः। सूत्रमदो धात्वंशलोपनिमित्तकार्धधातुकपरकेग्लक्षणगुणवृद्धिप्रतिषेधक-मिति सिद्धान्तः।

तत्र किं सार्वत्रिकोऽयं निषेधो न वेति सङ्ख्या सङ्ख्यावतां पुरस्ता-दुपाचर्यते। तथा हि प्रसङ्गेऽमुष्मिन्नाचार्यः कात्यायनो व्याजहार—'यङ्-यक्-क्य-वलोपे प्रतिषेधः' इति।

एवञ्चोक्तपरिगणनान्नायं निषेधः सार्वत्रिक इति, तथा ह्युक्तविचरणानुसारं 'न धातुलोप आर्धधातुके' इत्यत्र 'न-यङ्-यक्-क्य-वलोप आर्धधातुके' इत्येव सूत्र्यताम्। ततश्च यङ्लोपे यक्लोपे क्यलोपे (औपदेशिकाकारान्त) वलोप एव सूत्रप्रवृत्तिः; एवञ्च 'धात्वंशभूतानां यङ्-यक्-क्य-व इत्येतेषां लोपस्य निमित्तभूत आर्धधातुके परे सति इग्लक्षणगुणवृद्धी नो भवतः' इत्यर्थः पर्यवसितः। यथाक्रममुदाहरणानि—

(क) यङ्लोपे—१. बेभिदिता, २. मरीमृजकः।

(ख) यक्लोपे—१. कुषुभिता, २. मगधकः।

(ग) क्यलोपे—१. समिधिता, २. दृषदकः।

(घ) वलोपे—जीरदानुः इति।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

विवरणं यथा—

(क-१) 'बेभिदिता' इति। अत्र भिदिर्-विदारणे (रु.उ.अ.) अस्माद् 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इति यङि द्वित्वेऽभ्यासादिकार्ये 'बेभिद्य' इत्यस्मात् सनाद्यन्तत्वाद् धातुत्वात् कर्तरि तृचि इटि च 'बेभिद् य् इ तृ' इत्यत्र 'यस्य हलः' इति यलोपे सति 'बेभिद् तृ' अत्र लघूपधगुणस्य प्राप्तिरस्ति।

एवमेव—

(क-२) 'मरीमृजः' इति। अत्रापि यङन्ताद् 'मरीमृज्य' इति धातोः पचाद्यचि, 'मरीमृज्य अ' इत्यत्र 'यङोऽचि च' इति यङो लोपे, 'मरीमृज् अ' इत्यत्रापि लघूपधगुणप्राप्तिरस्ति। अग्रेऽपि—

(ख-१) 'कुषुभिता' इति। अत्र 'कुषुभ-क्षेपे' इति कण्ड्वादिधातुः, ततो यकि 'कुषुभ्य' इत्यस्मात् तृचि, इटि 'कुषुभ् य् इ तृ' इत्यत्र तृच्रूपमार्धधातुकं परनिमित्तमाश्रित्य 'यस्य हलः' इति यलोपे सति लघूपधगुणप्राप्तिरस्ति। एवमेव—

(ख-२) 'मगधकः' इति। अत्र उक्तगणीयो 'मगध-परिवेष्टने' इति धातुः। ततो यकि ण्वुलि, 'मगध् य अक' अत्रापि अकरूपमार्धधातुकं निमित्तीकृत्य धात्वंशभूतयकारसङ्घातलोपे सति 'मगध्' इत्यत्र 'अत उपधायाः' इति वृद्धिप्राप्तिरस्ति। इतोऽग्रे—

(ग-१) समिधिता इति। अत्र 'समिध्' इति शब्दः, तत्र 'आत्मनः समिधमिच्छति' इत्यर्थे 'सुप आत्मनः क्यच्' इति क्यचि, 'समिध्य' इत्यस्माद् धातुत्वात् तृचि इटि, 'समिध् य इ तृ', अत्र आर्धधातुके इटि परे क्यचो यकारलोपे सति, 'समिध् इ तृ' इति दशायां लघूपधगुणप्राप्तिश्चकास्ति। तथैव—

(ग-२) 'दृषदकः' इति। अत्र आत्मनो दृषदमिच्छतीत्यर्थे उक्तसूत्रेण क्यचि 'दृषद्य' इत्यस्माद् धातुत्वाद् ण्वुलि, तन्निमित्तके 'यस्य हलः' इति यकारसङ्घातलोपे 'दृषद् अक' इति दशायाम् 'अत उपधायाः' इति वृद्धिप्राप्तिः स्पष्टैव।

एवमेव—

(घ) 'जीरदानुः' इति। अत्र 'जीव-प्राणधारणे' औपदेशिकाकारान्तो धातुः, परिगणने औपदेशिकाकारान्तो वकारो गृहीतः। स च 'जीव' इत्युपदेशरूप इति बोध्यम्। अत्र 'जीवे रदानुः' इति प्रत्याहाराह्निकस्थहयवरट्[२] सूत्रकथितभाष्यदिशा रदानौ प्रत्यये 'जीव् रदानु' इति दशायाम्, लोपो व्योर्वलीति सूत्रेण धात्वंशस्य 'व' इत्यस्य लोपे सति 'जी रदानु' इति दशायां 'सार्वधातुकार्धधातुकयोः' इत्यनेन इगन्ताङ्गस्य 'जी' इत्यस्य गुणप्राप्तिः स्फुटैवेति बोध्यम्।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अत्र सर्वत्र धात्वंशलोपनिमित्तकार्धधातुकपरकता जागर्त्येव, ततश्च 'न धातुलोप आर्धधातुके' इत्यस्य उद्देश्यताऽवच्छेदकताक्रान्त्या यथाप्राप्तं गुणो वृद्धिर्वा न भवतीति प्रसिद्धं सिद्धमेवेति विदाङ्कुर्वन्तु विद्वांसः। अनार्धधातुके 'तोतार्ति[3]' इत्यादौ तूद्देश्यतावच्छेदकानाक्रान्तत्वादस्य सूत्रस्याप्रवृत्त्या न गुणनिषेध इति त्वन्यत्।

अत्राग्रे चिन्त्यन्तेरूपं यत् परिगणनेन को लाभः? तत्रोच्यते—यङ्यक्क्यवलोप एव आर्धधातुके परे गुणवृद्धी न भवतः, अन्यत्र तु गुणवृद्धी भवत एव। क्वान्यत्र? इत्यनुयोगे आचार्यकात्यायन उपाचचार—

'नुम्लोपे स्रिव्यनुबन्धलोपेऽप्रतिषेधार्थम्'।

अत्रेत्थमन्वयो बुधेलिमः—'नुम्लोपे स्रिव्यनुबन्धलोपे गुणवृद्ध्योः अप्रतिषेधार्थं परिगणनं कर्तव्यम्, 'यङ्यक्क्यवलोपे प्रतिषेधः'। एवञ्च—'सर्वं वाक्यं सावधारणं भवति, यथा अब्भक्षो वायुभक्ष[4] इति, अप एव भक्षयति, वायुमेव भक्षयति, एवमिहापि सिद्ध एव न साध्य इति' इति पस्पशाह्निकस्य भाष्योक्तोक्तिदिशा 'धात्वंशभूतयङ्यक्क्यवलोपनिमित्तकार्धधातुकपरकगुणवृद्धी एवानेन निषिध्येते इति, नान्यत्र' 'तोतोर्ति' इत्यादौ। भाष्येऽपि उदाहरणरूपेण नुमादयो गृहीताः।· यथा —

'नुम्लोपे स्रिव्यनुबन्धलोपेऽप्रतिषेधार्थम्' इति। अत्र वार्तिके धात्वंशलोपनिमित्तकार्धधातुकपरकगुणवृद्धिनिषेधकानि त्रीणि स्थलानि निर्दिष्टानि, तानि यथा—

१. नुम्लोपे, २. स्रिवि, ३. अनुबन्धलोपे इति च। तत्र—

१. नुम्लोपे इति। 'नुम्'शब्दोऽत्र[5] नकारवचनः। तथा च नुम्लोपे = नकारलोपे इति।

२. स्रिवि इति। [6]स्रिवु-गतिशोषणयोः (दि.प.से.) इति धातावित्यर्थः। परिगणने 'यङ्यक्क्यवलोपे प्रतिषेधः' इत्यत्र 'वलोप'शब्देऽकारो विवक्षितः, तेन उपदेशेऽकारविशिष्टो धातुर्गृह्यते, यथा जीव-प्राणधारणे इति।

३. अनुबन्धलोपे इति च। एवञ्च नकारलोपे सति, स्रिव्धातौ वकारलोपे सति, अनुबन्धलोपे च सति गुणवृद्धी भवतः। एषु सत्स्वेव गुणवृद्धी भवतः, यङ्यक्क्यवलोपेषु सत्सु तु गुणवृद्धी न भवत इति विवेक इति बोध्यम्। यथाक्रममुदाहरणानि यथा—

(क) नलोपे—

अभाजि, रागः, उपबर्हणम्। तत्र 'अभाजि' इत्यत्र 'भञ्जो आमर्दने' इति (रु.प.से.) धातुः। अत्र औपदेशिक एव नकारः —

CC-0. Sampurnanand University Collection. Digitized by eGangotri

'नकारजावनुस्वारपञ्चमौ झलि धातुषु।
सकारजश्च शकारश्चेर्षाट्टवर्गस्तवर्गजः ।।

इति वचनात्। एवं 'रागः' इत्यत्रापीति। एवञ्चात्र नुमोऽभावाद् नकारसञ्ज्ञाभूतनुम्शब्दो गृह्यतेतमामिति। अस्माद् धातोः कर्मणि लकारे लुङि 'भञ्जेश्च चिणि' इति वा नलोपे रूपम्। चिणं निमित्तीकृत्य नलोपोपधावृद्धी सिद्धे। 'रागः' इत्यत्र तु रञ्ज इत्यस्माद् घञि, 'घञि च भावकरणयोः' इति नलोपः। अत्रापि घञमेव निमित्तीकृत्य नलोपोपधावृद्धी अभूताम्। 'उपबर्हणम्' इत्यत्र तु उपोपसृष्टबृंहतेर्ल्युटि ततो 'बृहेरच्यनिटि' इति नकारलोपः। अत्रापि नलोप-लघूपधगुणौ ल्युण्निमित्तकावेवेति दिक्। इत्थं नुम्लोपे = नकारलोपे त्रीण्युदाहरणानि।

स्रिवे उदाहरणं यथा—

(ख) 'अस्रेमाणम्ँ' इति। 'अत्र स्रिवुँ-गतिशोषणयोः' (दि.प.से.) इति धातुः। अत्र उँकारोऽनुनासिक एव युक्तः, इत्संज्ञकत्वात्। ततो 'धातोर्मनिन् क्वनिब्वनिपश्च' इति मनिनि, अनुबन्धलोपे 'स्रिव् मन्', अत्रापि मत्परकौ लोपेगङ्गगुणौ सिद्धौ। 'स्रेमन्' इत्यत्र 'नञ्' इति समासे णत्वादिषु जातेषु अस्रेमाणम् (गमनशीलः शोषणशीलो वा) इत्यभवत्।

(ग) अनुबन्धलोपे यथा—लूञ्—लविता, लवितुम्। अत्रानुबन्धस्य लोपे सत्यपि तृनि तृचि वा इगन्तस्याङ्गस्य गुणोऽभूत्।

तदेवम्—'न धातुलोप आर्धधातुके' इति सूत्रस्य स्थाने 'न यङ्-यक्-क्य-वलोप आर्धधातुके' इत्येव यदि सूत्र्यते, तर्हि प्रवृत्तिनिवृत्ती इत्थं भविष्यतः, तथा हि—

'न यङ्यक्क्यवलोप आर्धधातुके'।

| प्रवृत्तिः (गुणवृद्ध्योर्निषेधः) | निवृत्तिः (गुणवृद्ध्योरप्रतिषेधः) |
|---|---|
| (क) मरीमृजकः, बेभिदिता (यङ्लोपे) | (क) अभाजि, रागः, उपबर्हणम् (नलोपे) |
| (ख) मगधकः, कुषुभिता (यक्लोपे) | (ख) अस्रेमाणम् (स्रिवि) |
| (ग) दृषदकः, समिधिता (क्यलोपे) | (ग) लविता, लवितुम् (अनुबन्धलोपे) |
| (घ) जीरदानुः (वलोपे) | |

CC-0. Sampurnanand University Collection. Digitized by eGangotri

सूत्रेणानेन चतुर्षु स्थलेषु गुणवृद्धी निषिध्येते, अपरत्र त्रिषु स्थानेषु गुणवृद्धी विधीयेते इति अव्याप्त्यतिव्याप्तिनिरासः।

अत्र किञ्चित्—ननु चतुर्ष्वेव (यङ्लोपे यक्लोपे क्यलोपे वलोपे एव) स्थलेषु धात्वंशलोपनिमित्तकार्धधातुकपरकेको गुणवृद्ध्योर्निषेधादव्याप्तिः प्रसरीसरीति। तथा हि—

(क) स्यदः, (ख) प्रश्रयः, (ग) हिमश्रय इति।

अत्र हि—'स्यन्दूँ' प्रस्रवणे (भ्वा.आ.से.) इति धातुः, अस्माद् घञि, ततः 'स्यदो जवे' इत्यनेन नकारलोपे सत्यत्र घञो ञिन्निमित्तिका वृद्धिः प्राप्नोति। इदानीं 'धातुलोपे' इत्यत्र 'यङ्यक्क्यवलोपे' इति परिगणनात् 'सर्वं वाक्यं सावधारणं भवति' इति न्यायस्य जागरूकत्वाद् यङ्यक्क्यवलोप एव=यङ्लोप-यक्लोप-क्यलोप-वलोप-निमित्तक एवार्धधातुके परे गुणवद्ध्योर्निषेधात्, 'स्यदः' इत्यादौ उपर्युक्तचतुष्टयबहिर्भूतनिमित्तकार्धधातुके परे उपधावृद्धेरवसरात्। पूर्वं तु 'न धातुलोप आर्धधातुके' इति सूत्रे 'धात्वंशलोपनिमित्ते आर्धधातुके इको गुणवृद्धी न भवत इत्यर्थे सति, प्रकृते 'स्यदः' इत्यत्र 'स्यन्द' इत्यत्र च धात्वंशस्य नकारमात्रस्य लोपस्य निमित्ते घञि आर्धधातुके परे सत्त्वाद् वृद्धिर्निषिध्यते, नेदानीं तथेति दोषः[९]।

एवमेव—प्रोपसृष्टस्य[१०] हिमोपपदस्य श्रन्थधातोर्घञि तन्निमित्तकौ नकारलोपोपधावृद्धी भवतः, इदानीं परिगणनान्न स्यातामिति।

तत्रोच्यते—'स्यदो जवे', 'अवोदैध्मप्रश्रथहिमश्रथाः' इति निपातनाद् उभयं निर्भयं सिद्धमिति। तस्माद् 'यङ्यक्क्यवलोपे प्रतिषेधः' इति परिगणनं कर्तव्यमेव, येन धात्वंशत्वावच्छेदेन नहि, अपि तु धात्वंशसामानाधिकरण्येन एव गुणवृद्धिनिषेधः स्यात्, एवञ्च परिगणनं क्रियताम्, 'न यङ्-यक्-क्य-वलोप आर्धधातुके' इत्थं वा सूत्र्यतामिति। एवञ्च सति परिगणने, इष्टसङ्ग्रहः, अनिष्टनिरासः, निपातनेन च अतिव्याप्तिहार इति सकलेष्टसिद्धिरिति हेतोः परिगणनं कर्तव्यमेवेति। अत्रोच्यते—

'नास्ति परिगणनप्रयोजनम्'। न च एवं सति धात्वंशलोपनिमित्तकार्धधातुकपरकेको गुणवृद्ध्योः सार्वत्रिको निषेध आपतेत्। तथा च—नुम्लोपे (नकारलोपे) स्रिवुँ-गतिशोषणयोः (दि.प.से.) धातौ, अनुबन्धलोपे च यथाप्राप्तं

CC-0. Sampurnanand University Collection. Digitized by eGangotri

वृद्धेर्गुणस्य वा निषेधनिराकरणं कथन्तरां स्यादिति चेत्? शृणु, अमुष्मिन् सूत्रे पूर्वस्मात् सूत्रात् 'इको गुणवृद्धी' (१।१।३) इति सूत्राद् 'इकः' इति पदमनुवर्तते, एवञ्च—'धात्वंशलोपनिमित्ते आर्धधातुके परे सति इको गुणवृद्धी न भवतः' इत्यर्थः पर्यवसित इति बोध्यतांरूपम्। एवञ्चात्र वस्तुद्वयमवधेलिमम्—

१. इग्लक्षणगुणवृद्धिनिषेधः, २. आर्धधातुकनिमित्तको धात्वंशलोपः।

१. अभाजि, रागः—अत्र वृद्धिः इग्लक्षणा नास्ति। (यत्र इक्शब्देन गुणो वृद्धिर्वा विधीयेत, तत्र इग्लक्षणौ गुणवृद्धी भवतः)।

२. उपबर्हणम्, अस्रेमाणम्, लविता, पविता—एषु तु 'बृहेरच्यनिटि', 'लोपो व्योर्वलि' इत्याभ्यां सूत्राभ्यां नकारो वश्च लुप्येते, न तौ आर्धधातुकनिमित्तकौ। इत्थमेव लूञ् छेदने, पूञ् पवने इत्यत्रापीति। तस्मात्परिगणनं निष्प्रयोजनम्।

'स्यदः', 'प्रश्रथः', 'हिमश्रथः' इत्येषु इग्लक्षणगुणवृद्ध्यभावेऽपि निपानात् साधुत्वं सेत्स्यतीति सिद्धं वचः।

इदन्तु अवशिष्यते—'जीरदानुः' इति, अत्र जीव-प्राणधारणे (दि.आ.से.) धातो रदानौ प्रत्यये लोपो व्योर्वलीति वलोपस्य आर्धधातुकनिमित्तकत्वाभावात् (वल्प्रत्याहारमात्रनिमित्तकत्त्वात्)। एवञ्च—'अस्रेमाणम्' इत्यादाविव प्रत्यया-श्रयत्वाभावेन धात्वंशलोपनिमित्तकार्धधातुकपरकत्वाभावेन 'न धातुलोप आर्धधातुके' इति सूत्राप्रवृत्त्या गुणनिषेधप्रसङ्गाद् 'जेरदानुः' इत्थमनिष्टरूपप्रसक्तिः समापतेदिति चेत्? अत्र समाधिः, प्रकृतिप्रत्ययकल्पनाजालमालानां काल्पनिकत्वेन शास्त्रमात्रविषयत्वेन प्रक्रियान्तरेणापि[११] व्युत्पादयितुं शक्यतया दोषानवसरात्, तथात्वे च—जीवधातो रदानुक्प्रत्ययमकल्पयित्वा 'ज्या वयोहानौ' इत्यस्माद् रकि प्रत्यये सति उक्तरूपसिद्धेः। ज्याधातौ रकि प्रत्ययेऽनुबन्धलोपे, 'ग्रहिज्या....' इति सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'जिर' इति स्थिते 'हलश्च' इति दीर्घे 'जीरो दानुर्यस्यासौ' इति बहुव्रीहौ सति पूर्वपदप्रकृतिस्वरे 'जीरऽदानुः' अवग्रहे सति रेफाद् अकारः 'प्रत्यया आद्युदात्ताः' (३।१।४) उदात्ते सति इष्टसिद्धेः। सर्वैः पदपाठकारैस्तथैव स्वीकारात्। पूर्ववद् रदानुप्रत्ययेऽपि, आद्युदात्तत्वे सिद्धेऽपि अवग्रहभङ्गप्रसङ्गात्। किञ्च जीव इत्यस्मादपि रकि सति लोपो व्योर्वलीति लोपे इष्टसिद्धिः, तथात्वे च 'जीरदानुः' इत्यत्र 'क्ङिति च' इति गुणानवसरात्।

यद्यपीत्थम् 'उपबर्हणम्' इत्यत्र ल्युड्रूपार्धधातुकं निमित्तीकृत्य 'बृहेरच्यनिटि' इति धात्वंशलोपे सति गुणनिषेधः प्राप्नोति, तथापि तत्र बृहि-

CC-0. Sampurnanand University Collection. Digitized by eGangotri

धातुमस्वीकृत्य तदर्थकस्यैव बृहधातोरस्वीकारेणादोषात्। एवञ्च 'बृहेरच्यनिटि' इति वार्तिकमपि निष्प्रयोजनम्। 'आतश्च निबृह्यते' इति अनजादौ, 'निबर्हिता' इत्यादौ इडादावपि नकारादर्शनात्। किञ्च अजादौ 'बृंहयति' इत्यादावपि नलोपादर्शनात्। एवञ्च परिगणनमन्यथासिद्धम्।

'भेद्यते', 'छेद्यते' इत्यादौ तु धातोर्लोपो यस्मिन्, तस्मिन् 'धातुलोपे' इति बहुव्रीहिणा समाधानात्; तेन यत्र लोपो गुणवृद्धी चैकमेवार्धधातुकप्रत्ययं निमित्तीकृत्य प्रवर्तेताम्, तत्रैव गुणवृद्धिनिषेधः, नान्यत्रेति विवेकात्। 'भेद्यते' इत्यादौ तु णिलोपो यकम्, लघूपधगुणश्च णिचं निमित्तीकुरुतस्तरामिति।

[१२]'पापचकः', 'पापठकः', 'मगधकः', 'दृषदकः' इत्यादौ त्वकारलोपे कृते, तस्य स्थानिवत्त्वेन अकारसत्त्वेनोपधायां लघोरतोऽभावान्नास्ति वृद्धिप्रसङ्गः। स्थानिवद्भावश्चात्र 'अचः परस्मिन् पूर्वविधौ' इत्यनेन।

अत्र पुनस्तराङ्किञ्चित्—

न केवलं परिगणनमन्यथासिद्धम्, अपि तु 'न धातुलोप आर्धधातुके' इति कृत्स्नं सूत्रमेव न्यक्षेण अन्यथासिद्धमतो निष्प्रयोजनमतो न कार्यमिति सिद्धान्तसिद्धोऽवलक्षः पक्ष इति सत्सम्मतं मतमिति निर्विवादो वादोऽस्तीति बुधेलिमम्। न चैवं सति 'बेभिदिता', 'मरीमृजकः', 'मगधकः', 'कुषुभिता' इत्यादौ गुणवृद्ध्योरभावः? इति शङ्क्यम्।

यङो यकः क्यचो वा 'य' इत्यस्य 'अतो लोपः', 'यस्य हलः' इत्येताभ्यां निवृत्तौ, ततः परम् 'अचः परस्मिन् पूर्वविधौ'[१३] इति अकारस्य स्थानिवद्भावेन सत्त्वाद् उपधायां लघोरतश्चासत्त्वात् 'पुगन्तलघूपधस्य च'[१४], 'अत उपधायाः' इत्यस्य च प्रवृत्तौ गुणवृद्ध्योरप्रसङ्गात्।

न च उक्तस्थलेषु दोषाभावेऽपि यत्र हलचोरुभयोः स्थाने आदेशः, तत्र दोष आपतति, तथा हि—

१. अतिशयेन पुनः पुनर्वा लुनातीति लोलूयते, लोलूयत इति लोलुवः, एवम्— 'मरीमृजः' 'सरीसृपः' 'पोपुवः' इति, एषु लक्ष्येषु 'लोलूय, पोपूय, मरीमृज्य, सरीसृप्य' इति यङन्तेभ्यः पचादेराकृतिगणत्वादचि, ततः 'यङोऽचि च' इति 'य' इत्यस्य लोपः, स च लोपः 'य' इति हलच्समुदायस्थानिकः। एवञ्च— ईदृशस्थलेषु 'अचः परस्मिन् पूर्वविधौ' इत्यस्य न प्रवृत्तिः, लोपस्य अज्झलुभयस्थानिकत्वेन अचस्थानिकत्वाभावात् 'परनिमित्तोऽजादेशो न

CC-0. Sampurnanand University Collection. Digitized by eGangotri

स्थानिवत्' स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये, इत्येतदर्थक-सूत्रीयोद्देश्यतावच्छेदकताऽनाक्रान्तत्वादिति चेत्? न, उक्तोत्तरत्वात्, अर्थाद् अत्रापि 'अतो लोपः' इति सूत्रेणाकारं लोपयित्वा, ततः 'यङोऽचि च' इत्यनेन यमात्रस्य लोपे सति पूर्ववदिष्टसिद्धेरिति। एवञ्चात्रापि अकारस्य 'अचः परस्मिन्......' इति स्थानिवद्भावान्न गुणवृद्ध्यवसरलवलेशोऽपि।

अत्रेयं विचारणा—

'लोलुवः', 'मरीमृजः' इत्यादौ यदि पूर्वमेव 'यङोऽचि च' इति लुकि कृते, 'अतो लोपः' इत्यस्य अवसराभावात्कस्य स्थानिवत्त्वं स्यात्? तस्मादत्रायं विवेकः —

'यङोऽचि च', 'अतो लोपः' इति सूत्राभ्यां विधीयमानयोर्लुगल्लोपयोः कर्तव्याकर्तव्ये विचार्ये, तत्र 'विप्रतिषेधे परं कार्यम्'[१५] इति सूत्रात् 'पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति परिभाषणात् परत्वादत्र पूर्वम् 'अतो लोपः' इत्यनेन अतो लोप एव भविष्यति, ततः परं 'य्' इत्यस्य 'यङोऽचि च' इत्यनेन निवृत्तिरिति प्रक्रियाविदां समयो जागर्तिरूपम्।

न च 'कृताकृतप्रसङ्गि नित्यम्'[१६] इति परिभाषाया जागरूकत्वाद् अतो लोपे कृतेऽकृतेऽपि लुकः प्राप्त्या, तस्य नित्यत्वात् 'पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति परिभाषया परशास्त्रापेक्षयाऽपि ('अतो लोपः' इत्यपेक्षयापि) कृताकृतप्रसङ्गित्वेन नित्यस्य ('यङोऽचि च' इत्यस्य) बलीयस्त्वे न पूर्वं लुक् स्यादिति चेत्? न, लुगप्यत्रानित्यः, कथम्? 'शब्दान्तरस्य[१७] प्राप्नुवन् विधिरनित्यः' इति परिभाषान्तरस्य जागरूकत्वेन, प्रकृते 'यङोऽचि च' इति लोपस्य य्-य इति शब्दान्तरस्य प्राप्तत्वाल्लुगप्यनित्यः।

न च 'निरवकाशो विधिरपवादः'[१८] इति परिभाषान्तरस्यापि जागरूकत्वेन, अपवादस्य च सर्वापेक्षया बलवत्त्वादिति चेत्? न, 'अतो लोपः' इत्येतत्प्रवृत्त्यनन्तरं 'यङोऽचि च' इत्यनेन 'य्' इत्यस्य लोपविधानात् सावकाशात्।

किञ्च—तुष्यतु दुर्जनन्यायेन लुकोऽनवकाशत्वेऽपि न दोषः, कथमिति चेच्छ्रूयताम्—'अतो लोपः', 'यस्य हलः' इत्यनयोस्सूत्रयोः स्थाने योगविभाग[१९] इष्टसिद्ध्यर्थ इति प्रामाणिकाभाणकभणितेर्जागरूकत्वात् त्रीणि सूत्राणि विधास्यन्ते, तथा हि—

१. अतो लोपः, २. यस्य, ३. लोपः, इत्येवं रूपाणि। अत्र च द्वितीयस्मिन् सूत्रे 'अतः' इत्यनुवर्तयिष्यते, ततश्च 'आर्धधातुके परे यकाराकारस्य

CC-0. Sampurnanand University Collection. Digitized by eGangotri

लोप:' इत्यर्थ:। तत: 'हल:' इति, तस्य च 'हल उत्तरस्य यकारस्य लोपो भवति' इत्यर्थ:, एवञ्च 'लोलुव:' इत्यादौ अकारस्य लोपं विधाय, तस्य स्थानिवत्त्वाद् गुणवृद्धी न भविष्यत इति।

'नोनाव'[२०] इत्यत्र तु न दोष:, समाननिमित्तकस्यैव लुको लोपेन बाधात्। 'नोनूय' इति प्रकृतेर्यङो लोपस्त्वनैमित्तिक:, एवञ्च समाननिमित्तकता नास्ति। 'निकुचित:'[२१] इति तु गुणो न, 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषणादिति। तस्मात् सूत्रमिदं प्रत्याख्यातव्यमेवेति महाभाष्याशय:[२२]।

अत्रेदं बोध्यम्—यत्खलूक्तं प्राग् यद् 'धातुलोपे' इति बहुव्रीहि:, तत्र किञ्चित्—यत्र बहुव्रीहितत्पुरुषयोरर्थभेद:, तत्र तत्पुरुष एवेति पातञ्जल: समय:[२३]। कथमिति चेत्? लाघवाद्[२४] बहुव्रीहौ वर्तिपदार्थबहिर्भूतान्यपदार्थबोधरूपगौरवस्य जागरूकत्वात्। स्पष्टञ्चैतदधिभाष्यम्। अत एव—'स्वाहेन्द्रशत्रुर्वर्धस्व' इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितास्थमन्त्रे[२५] शत्रुशब्दं रूढमपहाय, क्रियाप्रवृत्तिनिमित्तकं गृहीतवान् कैयटभट्टाचार्य:, स्पष्टञ्च तत्रैव प्रदीपे[२६]। प्रकृते तु 'धातोर्लोप:' इति तत्पुरुषे स्वीकृते आर्धधातुके धातुलोपगुणवृद्ध्योरन्यतरस्यैव विशेषणं स्यात्, आवृत्त्या[२७] वा तत् सम्पादनीयम्, इष्यते तु 'आर्धधातुके' इति पदं सहैव धातुलोपगुणवृद्ध्योर्विशेषणं स्यादिति, स्पष्टञ्चैतदधिभाष्यम्[२७], अन्यथा 'भेद्यते' 'छेद्यते,' 'रोध्यते' 'शेष्यते' इत्यादौ दोषलवलेश: प्रसरीसरीति। भिदादिभ्यो ण्यन्तेभ्य: कर्मणि लकारे वर्तमाने लटि प्रथमपुरुषैकवचने सार्वधातुके यकि 'भिद् इय् त' इत्यत्र अनिडादावार्धधातुके यकि णिलोपे लघूपधगुणे टेरेत्वे 'भेद्यते' इत्यादीनि रूपाणि। न चात्र 'भिद् इ य त' इति दशायां णेरनिटीत्यत: प्रागेव[२८] लघूपधगुणे सति 'भुक्तवन्तं प्रति मा भुङ्क्था:' इति न्यायेन 'न धातुलोप....' इति सूत्रस्य प्रवृत्तौ सत्यामपि[२९] वैफल्याप्रवृत्त्यनवसरान्न दोष इति वाच्यम्, 'निषेधाश्च बलीयांस:'[३०] इति न्यायाद्[३१] उपसञ्जनिष्यमाणनिमित्तकेनाप्यपवादेनोपसञ्जात-निमित्तकस्याप्युत्सर्गशास्त्रस्य बाधात्।

किञ्च निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं पूर्वमेव न कुर्वतीति[३२] वैयाकरण्या सरण्या अकृतव्यूहपरिभाषया[३३] 'न धातुलोप....' इति निषेधस्य पूर्वमेव प्रवृत्ते:, अपवादविषयाभावस्यापि निमित्तत्वात्।

अत्र यद्यपि 'दधति' इत्यत्रेव 'दधस्तथोश्च' (८।२।३८) इत्यस्या-चारितार्थ्यदोषो नास्ति, 'न धातुलोप....' इत्यस्य प्राबल्यात् (द्र. बृहच्छब्देन्दु.)।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अत्र किञ्चित्—ननु 'धातुलोपे' इत्यत्र लाघवात्तत्पुरुष एवाश्रीयताम्, तथापि अचः परस्मिन्निति णिलोपस्य स्थानिवत्त्वेन 'भेद्यते' इत्यादौ दोषानवसरात्, अभावातिदेशेन निषेधाप्रवृत्तेः, 'काममतिदिश्यतां सच्चासच्चापि नेह भारोऽस्ति' इति नियमात्। न चैवं सर्वत्र सति 'न धातुलोप....' इत्यस्य वैयर्थ्यीति शङ्क्यम्, 'लोलुवः', 'पोपुवः' इत्यादौ तत्सार्थक्यादिति चेत्, न, धात्वंशलोपाभावप्रतियोगिनोऽशास्त्रीयत्वेन तदभावस्य तासि परे नित्यानिट्त्ववद् अतिदेशाभावाददोषात्। यन्निमित्तप्रयुक्ता प्राप्तिः, तन्निमित्तकवैकल्यातिदेशद्वारैव तत्कार्याभावस्याप्यनेनातिदेशात्। यथा—'यन्निमित्तवैकल्यप्रयुक्ता प्राप्तिः, तन्निमित्तातिदेशद्वारैव तत्कार्यस्याप्यतिदेशः' इति स्वीकारात्। 'अचः परस्मिन् पूर्वविधौ' इति विधिशब्दबलात् कार्यवद् निमित्तस्यापि शास्त्रीयस्यैव ग्रहणौचित्यात्।

अत्रादो ज्ञातव्यम्—'न धातुलोप.....' इति सूत्रेण गुणवृद्ध्योर्विध्योरिक्परिभाषाया वा निषेधकम्? नाद्यम्, तयोर्व्यवहितत्वात्। नान्त्यम्, इक्परिभाषाया गुणत्वाद् इति चेत्, अत्रोच्यते—

गुणवृद्ध्योः प्राधान्यादयं निषेधस्तयोरेव, न तु तद्गुणभावाद् इक्परिभाषाया अयं निषेधः। प्राधान्यञ्चात्र संस्कार्यरूपम्[३४]। अयं भावः—यथा मीमांसकमते तिङ्प्रत्ययोपात्तया भावनया (तन्मते भावनारूपव्यापारस्य तिङर्थत्वात्) आक्षिप्तस्यापि कर्तृपदार्थस्य देवदत्तादेः क्रियां प्रति गुणभावेऽपि प्राधान्यम्, यथा वा 'दध्ना जुहोति' इति वाक्ये तृतीयान्तपदोपात्तस्य दध्नो गुणं प्रत्यनुवादार्थं विध्युपस्थापकत्वेन होमस्य गुणभूतस्याप्यन्वयः, तथा प्रकृते तत्तत्परिभाषोपस्थित्यर्थं तत्तत्प्रदेशभूतस्थानिप्रदर्शनलिङ्गतया (परिभाषाणां स्ववृत्तिलिङ्गचिह्नितोपस्थितित्वनियमात्) गुणभूतयोरपि तदुपकार्यतया गुणवृद्ध्योः प्राधान्यम्। (स्पष्टञ्चैतद् नागेशभट्टाचार्यशिष्यकृतभाष्यप्रदीपोद्द्योतच्छायायाम्)। किञ्च—'इको गुणवृद्धी' इत्यत्र विशिष्टानुवृत्त्यैव निर्वाहे, पुनर्गुणवृद्धिग्रहणसामर्थ्याद् एतदप्रवृत्तेः। न चैवम् 'इकः' इत्येव सूत्र्यताम्, परिभाषात्वभङ्गः, (तथात्वे—अनुवृत्त्यर्थमेव 'इकः' इति स्यादित्यभिप्रायः) योगविभागसामर्थ्येन परिभाषात्वाक्षतेः (द्र. बृहच्छब्देन्दु.)। अत एव— उत्तरत्र 'क्ङिति च', 'दीधीवेवीटाम्' इत्यनयोः सम्बन्धः सुकरः, परिभाषानिषेधे सति तत्रैतदसम्बन्धात्।

एतत्सूत्रकृतगुणवृद्धिनिषेधोदाहरणन्तु—'लोलुवः', 'पोपुवः' इत्यूकारान्तधातुष्वेवेति। हलन्तेभ्यः पच्प्रभृतिभ्यः क्रियासमभिहारे यङि, 'पापच्य्' इत्यस्मात् सनाद्यन्तत्वेन[३५] धातुत्वात् पचाद्यचि 'पापच्य अ' इत्यत्र यङोऽचि चेति लोपे

CC-0. Sampurnanand University Collection. Digitized by eGangotri

'पापचः' इति रूपम्। तत्र गुणेऽकारस्य अकार एव, तन्निषेधस्य निष्प्रयोजनात्[३६]। निषेधप्रयोजनं त्वित्थम्—यङन्ताद् यङ्लुगन्ताच्च रूपभेदे सति बोध्यम्, तथा हि क्रियासमभिहारे—

| (क) यङ् | (ख) यङ्लुक् |
|---|---|
| पापच्य | पापच् |
| पापचकः | पापाचकः |

अतिशयेन पुनः पुनर्वा पाककर्ता इत्यर्थः। अयं भावः—

(क) यङन्तात् 'पापच्य' इत्यादौ ण्वुलि[३७] अकि, 'पापच्य अक'[३८] इति स्थिते 'अतो लोपः', 'यस्य लोपः' इत्येताभ्यां विहिताभ्यां लोपाभ्यां रूपसिद्धिः। अत्र अलोपस्य स्थानिवत्त्वान्न वृद्धिः, 'यस्य लोपः' इत्यत्र 'यस्य' इति सङ्घातग्रहणमनाश्रयणीयम्।

(ख) यङ्लुगन्तात् 'पापच्'[३९] इत्यस्माद् ण्वुलि 'पापच् अक' इत्यत्र यङो लोपस्य अनैमित्तिकत्वाद् धात्वंशलोपनिमित्तकार्धधातुकपरकत्वाभावाद् 'अतो लोपः' इत्यनेन अकारस्य पृथग्लोपाकरत्वेन अचः परस्मिन्निति स्थानिवत्त्वाप्रसङ्गाद् इग्लक्षणयोरेव गुणवृद्ध्योर्निषेधात् प्रकृते समस्तकारणाभावात् प्रकृतसूत्रीयोद्देश्यतावच्छेदकाऽनाक्रान्त्या अप्रवृत्त्या यथायथं गुणवृद्धी भवत एवेति 'पापाचकः' इत्येव, एवं 'बेभेदिता' इत्यपि वृद्धिगुणघटितरूपे एव साधुनी इति बोध्यमिति (द्र.बृहच्छब्देन्दु.)।

इदं विचार्यते—अतिशयेन पुनः पुनर्वा लुनातीत्यर्थे कर्तरि पचाद्यचि किं रूपम्। तत्र यङन्तात् 'लोलूय' इत्यस्मादचि 'लोलूय अ' इत्यत्र यङोऽचि चेति लोपे 'लोलू अ' इत्यत्रानेन गुणाभावे उवङि[४०] 'लोलुवः' इति रूपम्। एवम्—पोपुवः, बोभुवः, तोष्टुवः, इयङि सति नेनियः (अतिशयेन पुनः पुनर्वा नेता), अग्रेऽपि बेभियः (ञिभी भये), चेचियः (चिञ् चयने), जेजियः (जि जये) इत्यादीनि रूपाणीति मन्ये। अत्र 'लोलुवः', 'नेनियः' इत्यत्र उवङियङोः आदिष्टादचः पूर्वत्वेन दृष्टस्य लघूपधगुणे कर्तव्ये न स्थानिवत्त्वम्, 'अङ्गकार्ये[४१] कृते पुनर्नाङ्गकार्यम्' इति, [४२]सञ्ज्ञापूर्वकविधेरनित्यत्वाद् इति वा नियमात्। एवञ्च—'लोलुवः', 'नेनियः' इत्यादौ उवङि इयङि वा कृतयोः अङ्गवृत्तपरिभाषया गुणस्य न पुनः प्रवृत्तिः।

किञ्च—अत्र यङो यस्य सङ्घातलोपमकृत्वा 'अतो लोपः' इति पृथगल्लोपे 'या'[४३] 'वा' इत्यादिभ्यो यङि ततः पचाद्यचि 'यायाय् य' 'वावाय् अ' इत्यत्र

CC-0. Sampurnanand University Collection. Digitized by eGangotri

'अतो लोपः', 'यस्य', 'हलः' इति पूर्वोक्तरीत्या योगविभागदर्शनदशादिशा पृथगल्लोपे, ततो व्यञ्जनमात्रस्य लुकि अजादेशस्य 'अचः परस्मिन् पूर्वविधौ' इति स्थानिभूतादचः पूर्वत्वेन दृष्टस्याकारस्य 'आतो लोप इटि च' आतो लोपे करणीये परनिमित्तकस्य अजादेशस्य स्थानिवत्त्वेन आतो लोपेन न भूयताम् इति वाच्यम्, 'योग इष्टसिद्ध्यर्थः' इति परिभाषणाद् गुणवृद्ध्यन्तरप्राप्तियोग्यविषयतायां सत्यामेव, योऽच्प्रत्ययः, तस्मिन्नेव सति पृथगल्लोपस्वीकारात्। गुणवृद्ध्यन्यतरप्राप्त्यनर्हविषयतायां 'यस्य हलः' इत्यत्र यस्येति सङ्घातग्रहणमिति स्वीकृत्या समुदायलुगेवेति यत्किञ्चिदेतत्।

एवञ्च योगविभागादिष्टसिद्धिः।

| गुणवृद्ध्यन्तरप्राप्तियोग्यविषयेऽच्प्रत्यये 'अतो लोपः' | गुणवृद्ध्यन्तरप्राप्त्यनर्हविषयेऽच्प्रत्यये समुदायस्य यस्येति सङ्घातस्य लोपः। |
|---|---|

इति पृथगल्लोपः।

अत्रोभयथा रूपसाम्यमेव, अत एव, 'सनीस्रंसते', 'दनीध्वंसते' इत्येव रूपम्। 'मृजूष् शुद्धौ' इत्यस्य यङ्लुगन्तात् 'मरीमृज्' इत्यतः कर्तरि पचाद्यचि यङो लोपस्य निर्निमित्तकतया गुणनिषेधाप्रवृत्तौ 'मरीमर्जः' इति, एवम्—ण्वुलि वृद्धिनिषेधाप्रवृत्तौ 'मरीमर्जकः', 'नोनाव' इति; परन्तु—'मरीमृज्य' इति यङन्तात् पचाद्यचि यङोऽचि चेति यङो लोपे 'न धातुलोप....' इति गुणनिषेधप्रवृत्तौ 'मरीमृजः' इति, एवम्—ण्वुलि 'मरीमृजकः' इत्येव रूपमिति विवेकः। 'न धातुलोपः....' इति प्रत्याख्यानपक्षे तु, पृथगल्लोपं कृत्वा तस्य स्थानिवत्त्वेन गुणनिषेधः सिद्ध इति बोध्यम्।

'दरीदृश्यते' इत्यादौ, अत्र अङादेशस्य लाक्षणिकत्वेनाग्रहात्, अनर्थकत्वादपि तदग्रहात्, विकरणानां श्नादीनां तु द्योत्यार्थेनार्थवत्त्वाङ्गीकारादिति[४४]।

एवञ्च 'गम्लृ गतौ' इत्यस्माद् 'धातोरेकाच....' इति बाधित्वा 'नित्यं कौटिल्ये गतौ' इति यङि, द्वित्वाभ्यासलोपजश्त्वादिषु 'जङ्गम्य' इत्यस्मात् कर्तरि अचि, ण्वुलि वा, 'जङ्गम्य अक' 'जङ्गम्य अ' इति स्थिते, 'गमहनजनखनघसां लोपः क्ङित्यनङि' इत्युपधालोपे चिकीर्षिते, 'अनङि' इति पर्युदासाद् निषेधो न प्रवर्तते, यङ्त्वात्, अर्थवत्त्वाभावात्, लाक्षणिकत्वाच्च। तेन 'जङ्गमकः, जङ्गमः' इत्येव भवतः। एवमेव—'याति' इत्यत्र अल्लोपोऽपि सिद्ध एव। अपरत्र

CC-0. Sampurnanand University Collection. Digitized by eGangotri

यङ्लुगन्तात् ण्वुलि 'जङ्गम् अक' इत्यत्र नानेन वृद्धिनिषेधः, अतो 'जङ्गामकः' इत्येव रूपम्, 'पापाचकः' इत्यादिवदिति पूर्वमुक्तम्।

अत्र बृहच्छब्देन्दुशेखरे उक्तम्—'यत्तु 'गमहन.....' इत्यत्र 'कित्यनङि' इत्येव वाच्यम्, ङिति तु 'अनङि' इति निषेधाद् भविष्यति, एवं सिद्धे सति, ङिति इति मुख्यश्रूयमाणाजादिङित्प्रत्ययग्रहणार्थम्, एवञ्चात्र लोपो न।

'मरीमृजकः' इत्यत्र व्यवस्थितविभाषाश्रयणाद् वृद्धिविकल्पो नेति, तन्न, पर्युदासे 'अङ्भिन्ने विकरणे' इत्यर्थस्याप्यापत्तेः, किञ्च उत्तरत्र 'ङिति' इत्यस्यावश्यकत्वाद् वृद्ध्यभावकल्पने मानाभावाच्च।

'दरीदृशकः' इत्यत्र अङ्निमित्तगुणस्तु न, उक्तयुक्तेः। एतेन 'यस्य हलः' इति 'समुदायलोपः' इत्यपास्तम्, सङ्घातग्रहणपक्षे 'आदेः'[४५] परवचनात् सिद्धम्' इति तत्सूत्रस्थभाष्यविरोधात्। 'यङ्-यक्-क्यप्-अलोपे प्रतिषेधः'[४६] इति 'न धातुलोप...' इति सूत्रस्थवार्तिके यक्-क्यपोर्ग्रहणन्तु प्रौढ्यैव।

यत्तु—'यस्य' इति लोपस्यावयवलोपत्वे, यङन्ताद् ण्वुलि 'जङ्गमकः' इत्यत्र अतो लोपः स्यादिति प्राचीनोक्तदूषणावसरे त्वयापि 'पापाचकः' इत्यत्रेव वृद्धेर्दुर्वारतया, [४७]कुशकाशावलम्बनेन वृद्धिनिवारणस्य लोपनिवारणेऽपि तौल्याद् इति मनोरमायामुक्तम्, तत् तद्रीत्यापि तदीयग्रन्थस्य तुष्यतु दर्जनन्यायेन अशुद्धत्वबोधनायेत्यलम्। अत एव—'यङोऽचि' इति लुग्विधायकं भाष्ये न प्रत्याख्यातम्। धात्विति किम्? लूञ्—लविता। तदभावे बहुव्रीह्यलाभेन 'लोपनिमित्ते' इत्यर्थालाभात्।

ननु 'आर्धधातुके' इति व्यर्थम्, बहुव्रीहिस्तु—तं विनापि 'एकाचो द्वे इतिवद् भविष्यति' इति चेत्? न, 'तोतोर्ति'-[४८]व्यावृत्त्यर्थत्वात्।

'क्ङिति च' इति सूत्रस्थभाष्यात्तु एषां यङ्लुगन्तानामभाव एव लभ्यते भाषायामिति[४९] बोध्यम्। यदि तु—'लोपयति' इति लोप इति विगृह्य 'लोपनिमित्ते' इति व्याख्यायते, तदा धातुग्रहणं स्पष्टार्थमिति।

यङ्लुगन्तादचि 'लोलुवः', 'पोपुवः' इत्याद्येवोदाहरणमिति मत्वा 'ऊचोऽचि' इति वार्तिकं तु न युक्तम्, 'नेनियः' इत्याद्यसिद्धेरिति दिङ्मात्रमत्र युक्तं बोध्यम्। अत्रत्यो निर्णयो बहुकालसाध्य इत्येतावतैव सन्तोष्टव्यम्, अत एव विरन्तव्यमिति मन्तव्यमिति मितं वचः, सर्वदा सर्वमवदातमिति शम्।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

'न लोप आर्धधातुके' हि सूत्रमेतदस्ति यद्
वृद्धिरेषिकाऽपि[५०] गुणश्च तेन बाध्यते ध्रुवं हि।
न चास्ति तत्प्रयोजनं यङो यकश्च वाक्ययो-
रनेन लोप एष इष्यते विधेहि मन्यतां तम्[५१] ।।
वस्तुतश्चतुर्षु तेषु च स्थलेषु निश्चितं हि
स्थानिवत्त्वहेतुनैव नो गुणादिके भवेद्यतः ।
प्रश्नथ-स्यदादिकं निपातनेन सिद्ध्यति
स जीरदानुशब्द एष सम्प्रसारणाद् भवेत्[५२] ।।
स्थानिवत्त्वहेतुनैव लोलुवादि सिद्ध्यति
योगभागसंश्रयाल्लुकोऽवकाश एव नास्ति ।
भिन्नवर्णसंश्रयाल्लुगत्र लोपबाधितो
सन्निपातलक्षणान्न कश्चिदस्ति दोष एव[५३] ।।
पुत्रा येन तु पाठिता निजधिया सर्वेऽपि ते संस्कृतं
कन्याश्चापि समास्तथैव सततं तत्संस्कृतं पाठितम् ।
प्रौढध्यानवशादिहाविरकरोत् श्रीव्यासकूटं तथा
वीणापाणियुतं गुरुं पशुपतिं तातं नमामो मुहुः।।

**टिप्पण्यः–**

१. सूत्रमिदमष्टाध्याय्यां वृद्धिपादे प्रथमविंश्यां चतुर्थम्। प्रत्यध्यायं प्रतिपादं प्रथमसूत्रीय-प्रथमपदेन तत्पादव्यवहारः साम्प्रदायिकः, यथा—वृद्धिपादः, भूपाद इत्यादि। प्रथमपदेन ग्रन्थव्यपदेशो यथा वेदेष्वपि—ईशोपनिषद्, केनोपनिषद् इत्यादि। प्रतिपादञ्च प्रतिविंशति 'विंशी' इत्यपि साम्प्रदायिकः समयः, प्रतिपादान्तं सूत्रसंख्यानिर्देशे प्रतिविंशि प्रथमसूत्रपदेन संख्यानिर्णयः, यथा प्रथमाध्यायप्रथमपादे—

'वृद्धिराद्यन्तवदव्ययीभावप्रत्ययस्य लुक् पञ्चदश' इति। अत्र वृद्धिरादैच्, आद्यन्तवदेकस्मिन्, अव्ययीभावश्च, प्रत्ययस्य लुक्श्लुलुप इति सूत्राणि यथाक्रमं प्रथमम्, एकविंशम्, एकचत्वारिंशम्, एकषष्टितमं च, तत्र २०+२०+२०=६० षष्टिः सूत्राणि, अवशिष्टानि पञ्चदशसूत्राणि, सम्मेल्य ६०+१५=७५ पञ्चसप्ततिः सूत्राण्यत्र। विंशतितो न्यूने सम्पूर्णसंख्योल्लेखः। एवञ्च प्रतिपादं सूत्रसंख्या विंशत्या विभज्य, भागशेषः स्पष्ट-मुल्लेख्य इति।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

२. हयवरट् इति। तत्र हि 'हयवरट्' इति, 'हरयवट्' इति न्यस्यतामिति प्रश्ने रेफस्य पूर्वोपदेशे 'हरयवद्' इति सूत्रे सति वलि रेफासद्भावाद् 'जीरदानुः' इत्यत्र लोपो व्योर्वलीति न प्रवर्तेतेत्याशङ्क्य 'रेफो व्योर्वलि' इत्यत्र निर्दिष्टेन 'रेफे वलि च परे व्योर्लोपः' इत्यर्थेन समाहितमिति।

३. तोतोर्तीति। 'तुर्वी हिंसायाम्' इति धातोर्यङ्लुकि लटि प्रथमैकवचने इडभावे रूपम्। पाणिनिना 'प्रथम' इत्यादयः सञ्ज्ञा एव विहिताः, 'शेषे प्रथमः' इति सूत्रणात्। पुरुषपदघटितनिर्देशात्। प्राचीनाचार्यव्यवहारानुरोधेन प्रसिद्धिबाहुल्येन पर्यायोऽपि, यथा- 'सुप्तिङुपग्रहलिङ्गनराणाम्....' इत्यादौ। प्राचीनसंस्कृते क्वचित् प्रसिद्ध्यतिशयात् सञ्ज्ञाया अपि पर्यायो व्यवह्रियते स्म, यथा—कमलाक्षो हि पद्माक्षोऽपि व्यवह्रियते स्म, नितरां स्वल्प ईदृशः प्रयोगः, न तु सर्वथा तदभावः। अत्र च उपग्रहः=आत्मनेपदपरस्मैपदव्यवस्थेति।

४. वायुभक्ष इति। तथा च भाष्यम्—सन्त्येकपदान्यप्यवधारणानि। तद्यथा—अब्भक्षो वायुभक्ष इति। अप एव भक्षयति, वायुमेव भक्षयति। (द्र. पस्पशा. धर्मजनकताधिकरणम्)

५. नुम् इति नकारस्य प्राचीनाचार्यसञ्ज्ञा, प्रातिपदिकस्य 'नाम' इतिवत्। 'यथेष्टं नामधातुषु' इत्यत्रेवात्रापि व्यवहारः। प्राचीनसञ्ज्ञानां बहुत्र व्यवहारोऽस्ति पाणिनीये, यथा— 'आङो ना स्त्रियाम्', 'आज्जसेरसुक्', 'दश समानाः' इत्यादि।

६. स्रिवुँ इति। अत्र धातोरुदित्त्वात्सानुनासिकपाठ एवार्षः।

७. अस्रेमाणम्। वैदिकोऽयं प्रयोगः, तथा हि—

'अजीजनन्नमृतं मर्त्यासोऽस्रेमाणं तरणिं वीळुजम्भम्।
दश स्वसारो अग्रुवः समीचीः पुमांसं जातमभि संरभन्ते॥ इति।

मन्त्रोऽयमृग्वेदस्य तृतीयाष्टकस्य प्रथमाध्यायस्य चतुस्त्रिंशस्य वर्गस्य मण्डलक्रमे तु तृतीयमण्डलस्य द्वितीयानुवाकस्य ऊनत्रिंशस्य सूक्तस्य त्रयोदशः। वैश्वामित्रं दर्शनम्। तत्रत्यवेदार्थप्रकाशसङ्क्षेपः—मर्त्यासः, मर्त्या=ऋत्विजः। अमृतम्=मरणधर्मरहितमत एव अस्रेमाणम्=क्षयरहितं हविर्भक्षणार्थं दृढदन्तं तरणिम्=अग्निम्। अजीजनन्=मन्थनेन उदपीपदन्.....इति।

८. गुणवृद्धी इति। 'धर्मादिष्वनियमः' इति राजदन्ताद्यन्तर्गणसूत्रात्परनिपातः, पूर्वनिपातानित्यत्वं तु 'लक्षणहेत्वोः.....' इत्यनेन साध्यम्।

९. 'स्यदो जवे' इति। जवेऽभिधेये 'स्यदः' इति घञि निपात्यते। स्यन्देर्नलोपो वृद्ध्यभावश्च। इक्प्रकरणाद् न धातुलोप इति प्रतिषेधो नास्ति (द्र.का. ६।४।२८)। जवः = वेगः। गोस्यदः = गोर्गतिविषयको वेगः, अश्वस्यदः (द्र. पदमञ्जरी)। वेगः = गतिविशेष इति (द्र. न्यासः)। तत्र (न धातुलोपसूत्रे) 'इको गुणवृद्धी' इगिति प्रकृतमनुवर्तते, तेनेग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः। न चेग्लक्षणा वृद्धिः, किन्तूपधालक्षणा। न चेयमुपधालक्षणा वृद्धिरिग्लक्षणा भवति निर्दिष्टस्थानिकत्वात्। तेन नास्त्यत्र तस्याः (वृद्धेः) प्रतिषेधः। गोस्यद इति भावे घञ् (स्यन्दनं स्यद इति भावसाधनोऽयमित्यर्थः) गवां स्यन्दो गोस्यन्दः, 'कृद्योगा षष्ठी समस्यते' इति (द्र.न्यासः)। जव इति किम्? तैलस्यन्दः, घृतस्यन्दः। (द्र.का.) तैलस्य श्रपणम् (स्यन्दनम्) इत्यर्थः (द्र.न्यासः)। अत्र नलोपो न।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

एवम् 'अवोदैध्मप्रश्रथहिमश्रथाः' (६।४।२९) इत्यत्रापि निपातनाद् यथायथं बोध्यम्। अवोपसृष्टस्य 'ऊन्दी क्लेदने' इत्यत्र घञि नलोपः, इन्धी दीप्तौ इत्यस्य घञि नलोपगुणौ, 'उन्दी क्लेदने' इत्यस्य औणादिके कनि नलोपगुणौ प्र-हिमान्यतरोपसृष्टस्य 'श्रन्थ मोचनप्रतिहर्षणयोः' इत्यस्य घञि नलोपवृद्ध्यभावश्च निपात्यते।

औणादिको मन्तु 'अर्ति-स्तु-सु-हु-सृ-धृ-क्षि-क्षु-भा-या-वा-पदि-यक्षि-नीभ्यो मन्' इति बाहुलकाद् (उणादयो बहुलम्) उन्देरपि। अत्र किञ्चित्—इग्लक्षणयोरेव गुणवृद्ध्योर्निषेधाद् अत्र निपातनावश्यकता। अत्र पुनस्तरां किञ्चिद् गुह्यमूह्यम्—न्यासे 'अत उपधायाः' इति प्रतीको धृतः, स च प्रकाशितकाशिकायां नादर्शि, तदेवं क्वचित् क्वचिद् न्यासपदमञ्जर्योः धृतप्रतीकानां मूलेऽदर्शनादन्यथादर्शनाद्वा वामनेन जयादित्येन पृथक् पृथक् काशिके निरमायिषातामिति युधिष्ठिरमीमांसकोक्तं सङ्गच्छत इति।

१०. प्रोपसृष्टस्येति। उपसृष्टस्य धातोरित्थमेव निर्देशो वैयाकरणाभिमतः, प्रपूर्वकस्य प्रोपपदस्य इति तथा न रोचत इति बहूनां समयः।

११. प्रक्रियान्तरेणापीति। अत एव 'बाधितम्' इति पदं बाधतेर्निष्ठायाम्, बाधाशब्दादितचि कृदन्तं तद्धितान्तं वा विगृह्यताम्, इष्टापत्तिरेव। 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति।

१२. पापचकः = अतिशयेन पुनः पुनर्वा पक्ता इत्यर्थः। यङन्ताद् ण्वुलि रूपम्। एवं 'पापठकः' इत्यपि। यङ्लुगन्ते तु 'पापाचकः' इत्येव (द्र.बृहच्छब्देन्दु.)।

१३. 'अचः परस्मिन्' इति। परनिमित्तकोऽजादेशः स्थानिवत् स्यात् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये (द्र.सि.कौ.अच्सन्धौ)। 'पापचकः' इत्यादौ 'पापच्य अक' इति दशायाम् 'अतो लोपः' इति यकाराकारस्य लोपः, स च परनिमित्तकः, सूत्रस्य 'आर्धधातुकोपदेशकाले यदाकारान्तं तस्याकारस्य लोपः स्यादार्धधातुके परे' एतदर्थकत्वात्, प्रकृते यङ् हि आर्धधातुकोपदेशः, अकारान्तश्च, तस्याकारस्य लोप आर्धधातुकेऽकि परे इति। एवञ्च ततः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये परनिमित्तकस्य लोपरूपाजादेशस्य स्थानिवत्वम्। न च 'पुनः प्रसङ्गविज्ञानात्' इति न्यायेन 'भिन्धि' इत्यत्रेव हिर्यथा, तथा 'तिसृणाम्' इत्यत्र परत्वात् 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इत्यनेन तिसरि सति, पुनस्त्रयादेशापत्तिरिति चेत्तत्रोच्यते—'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव इत्यदोषात्। यथाप्रयोगं तत्र तत्र चरितार्थयोर्द्वयोः कार्ययोरसम्भवाद् बाधकाभावात् पर्यायेण यथा—'ण्वुल्तृचौ' इति धातुमात्राद्विधानेन विनिगमकाभावात् सर्वधातुव्यक्त्युद्देश्येन द्वयोर्विधानात्, तयोर्युगपत् प्रवृत्तौ, अन्यतरस्य धातुव्यवहितत्वेन पर्यायेण यथा ण्वुलस्तृचश्च पृथक् पृथक् प्रवृत्तिः, एवं विप्रतिषेधस्थलेऽपि प्रसज्येत, तदानयेष्टप्रवृत्तिः साध्यते। द्वयोः शास्त्रयोर्यौगपद्यासम्भव एव विप्रतिषेधशास्त्रविषयः। क्वचिल्लक्ष्यानुसारमिष्टानुरोधेन स्वरितत्वप्रतिज्ञाबलात् 'स्वरितेनाधिकारः' (द्र. तत्त्वबोधिनी, बृहल्लघुशेखरौ च) इत्यनुसारं पूर्वमेव भवतीति पूर्वविप्रतिषेधा गतार्था इत्यप्युपायान्तरमिति।

१४. पुगन्तलघूपधस्य चेति। 'भिनत्ति' इत्यादौ 'भिनद् ति' इति दशायां लघूपधाङ्गस्य गुणनिषेधसिद्धये लघ्वी चासौ उपधा चेति लघूपधम्, तस्येति विग्रहे भाष्य उक्तः।

१५. विप्रतिषेधे परं कार्यमिति। परः=इष्टः। विप्रतिषेधो द्विधा—१. पूर्वविप्रतिषेधः, २. परविप्रतिषेधः। तत्र यत्र येन इष्टसिद्धिः, लक्ष्यानुरोधात् तेन कार्यं कार्यम्। एवञ्च

CC-0. Sampurnanand University Collection. Digitized by eGangotri

विप्रतिषेधे=तुल्यबलविरोधे परम्=इष्टं कार्यम्, अत एव परशब्दस्य परदेशरूपमर्थमङ्गीकृत्य, तदपवादभूतानि पूर्वविप्रतिषेधकानि सर्वाणि वार्तिकानि भाष्ये प्रत्याख्यातानि, इष्टार्थस्वीकारस्यैवेष्टत्वात्। पूर्वदेशपरदेशरूपार्थसत्त्वादिति। (द्र.परिभाषेन्दौ)।

१६. कृताकृत इति। कृताकृतप्रसङ्गत्वेनैव परशास्त्रापेक्षया नित्यं बलवद् इति, तथा च 'परान्नित्यं बलवद्' इति। अत एव 'तुदति' इत्यादौ, परं गुणं प्रबाध्य नित्यः शप्प्रत्ययः पूर्वं भवतीति।

१७. शब्दान्तरस्येति। 'कृताकृतप्रसङ्गि नित्यम्, तद्विपरीतमनित्यम्' इति; उत्तरांशस्य विवरणमस्ति—'शब्दान्तरस्य' इति। कृते यस्यां व्यक्तौ प्रवृत्तिः, अकृतेऽपि तस्यामेव प्रवृत्तौ नित्यम्, अन्यथाऽनित्यमिति भावः। (द्र.महाभाष्यच्छायाटिप्पणी)।

१८. निरवकाश इति। अपवादपदार्थस्तु 'येन नाप्राप्ते यो विधिरारभ्यते, स तस्य बाधको भवति' इति। अत्र नाऽप्राप्ते=यत्कर्तृकावश्यकप्राप्तावित्यर्थः। यथा—'वृद्धिरेचि' इति। 'अदेङ् गुणः' इत्यस्यापवादः। 'सूत्रयो=स्थाने' अत्र 'खपरि शरि विसर्गलोपो वा वक्तव्यः' इति विसर्गलोपः, 'महिम्नस्तोत्रम्' इतिवत्। अत एव श्रीमद्भागवते—'नन्दः किमकरोद् ब्रह्मन् छ्रेय एव महोदयम्। यशोदा च महाभागा पपौ यस्यास्तनं हरिः'।। इत्यत्र यशोदापक्षेऽर्थः स्फुट एव, नन्दपक्षे तु यस्य=नन्दस्य आस्तनं हरिः पपौ=पालितवान् इत्यर्थः स्पष्ट एव। (द्र.बलदेवविद्याभूषणकृता व्याख्या) अन्यथा 'पपौ यस्यास्तनं हरिः' इत्यत्र नन्दपक्षेऽर्थो घटेत। उक्तवार्तिकेन विसर्गलोपे इष्टसिद्धिः।

१९. योगविभाग इति। योगविभाग इष्टसिद्ध्यर्थ इति। ननु कोऽर्थोऽस्याः? योगविभाग इष्टसिद्ध्यर्थ एवेति चेत्? शास्त्रमात्रमिष्टसिद्ध्यर्थमेव, व्यावर्त्यं न स्यादस्याः। 'योगविभाग एवेष्टसिद्ध्यर्थः' इति हास्यास्पदम्। तत्रोच्यते—योगविभागोऽधिकलक्ष्यसङ्ग्रहार्थ इत्यर्थ इति भाति। वस्तुतस्तु पाणिनिना वृद्धिरादैजदेङ्गुण इति संहितापाठः प्राणायि, तत इष्टसिद्ध्यर्थः खण्डपाठात्मको योगविभागः कृत इति ऐतिह्यं बोध्यम्। 'योगे योगे उपतिष्ठते' इत्यादौ तथाऽर्थदर्शनात्।

२०. नोनावेति। 'नू शब्दे' इत्यस्माद् यङ्लुगन्ताद् द्वित्वेऽभ्यासगुणे 'नोनूय' इत्यस्मात् कर्तरि लकारे परोक्षे लिटि तिपि णलि, 'यङोऽचि च' चकाराद् यङो लोपे 'नोनू अ' वृद्धौ, अवादेशे 'नोनाव' इति रूपम्, 'तोष्टाव' इत्यर्थः।

२१. निकुचित इति। 'कुञ्च क्रुञ्च कौटिल्याल्पभावयोः' (भ्वा.प.से.) इति धातुपाठः। द्विसप्ततिर्व्रज्यन्ताः परस्मैपदिनः, तन्मध्ये तार्तीयकोऽयम्। तदुक्तम्—कौटिल्याल्पीभावयोश्च कुञ्चक्रुञ्चौ प्रकीर्तितौ। (द्र.कृष्णशङ्करकृतधातुपाठकारिका) तत्र न्युपसृष्टस्य कुञ्चतेर्निष्ठायां रूपम्। 'नि कुञ्च इ त' इत्यत्र 'अनिदितां....' इति सूत्रेण नलोपे (नकारजावनुस्वारपञ्चमौ झलि धातुषु) 'नि+कुच्+इ+क्त' अत्र 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' परिभाषया नलोपे सति जातह्रस्वोपधः सन् 'उदुपधाद्....' इति कित्त्वं न नाशयिष्यतीति। अर्थात् क्तस्य कित्त्वविघातो न भविष्यति, ततश्च क्ङिति चेति गुणो न।

२२. भाष्याशय इति। 'अनारम्भो वा' इत्युक्त्या प्रयोजनानि अन्यथासिद्धानीति हृदयम्। एतदर्थं सर्वत्र यदि य़ङोऽचि चेत्यपास्य 'अतो लोपः', 'यस्य हलः' इमे आश्रीयेते, तदा कुटिलङ्गच्छतीत्यर्थे 'जङ्गम्या अच्' इत्यत्र यङन्तस्य जङ्गम्यस्य अवयवस्य यङोऽकारलोपे

CC-0. Sampurnanand University Collection. Digitized by eGangotri

ततः स्थानिवत्त्वे 'गमहन....' इति उपधालोपः प्रसज्येत, तत्रोच्यते—स्थानिवत्त्वेन अङ्परकत्वाद् अनङीति निषेधान्नोपधालोप इति दिक्।

२३. पातञ्जलः समय इति। 'समयाः शपथाचारकालसिद्धान्तसंविदः' (द्र.नामलिङ्गा. ३।३।१४९) 'समयः शपथाचारसिद्धान्तेषु तथा धियि क्रियाकारे च निर्देशे सङ्केते कालभाषयोः' (द्र.मे. १२०।१११)।

(ख) बहुव्रीहितत्पुरुषयोरर्थभेदविषयके विचारे द्र. बृहद्वैयाकरणभूषणम्, अस्मत्सम्पादितम्, पृ. १९४ रूपाली टिप्पणीति।

अयञ्च वैदिकः प्रयोगः, सम्पूर्णमन्त्रो यथा—

आ ते॑ सु॒प॒र्णा अ॑मिनन्ताँ॒ एवैः॑
कृ॒ष्णो नो॑नाव वृष॒भो यदी॒दम्।
शि॒वाभि॒र्न स्मय॑मानाभि॒राग॑ात्
पत॑न्ति॒ मिहः॑ स्त॒नय॑न्त्य॒भ्रा॥ इति।

(द्र.१।१३।७९।२, अष्टकानुसारन्तु १।५।२७।२) तत्रत्यवेदार्थप्रकाशसंक्षेपो यथा—

'हे अग्ने! ते सुपर्णाः=शोभनपतनाः, रश्मयः, एवैः=गन्तृभिः=मरुद्‌भिः सह अभिनतं= आ समन्ताद् मेघं हिंसन्ति=वर्षणार्थं ताडयन्ति, प्रहतश्च कृष्णः कृष्णवर्णो वृषभः=वर्षिता मेघः नोनाव=भृशं शब्दमकरोत्। वैद्युताग्निप्रेरितः पर्जन्य आगच्छति......नोनाव=नौने-र्यङ्लुगन्ताल्लिटि। 'कास्प्रत्ययादाममन्त्रे लिटि' (कासोऽनेकाचश्चाममन्त्रे लिटि) इत्युक्ता-नामत्र। अत्र अच्छन्दसीति नोक्तम्, ब्राह्मणे आम इष्टत्वात्। पुत्रमामन्त्रयामास, प्रत्ययान्तत्वादाम्, अथ ह शुनःशेप ईक्षाञ्चक्रे, 'इजादेश्च...' इत्यामिति।

२४. लाघवाद् इति। बहुव्रीहौ अन्यपदार्थकल्पनारूपं गौरवम्, तच्च 'संसर्गो विप्रयोगश्च....' इत्यादिभिर्निर्णेयम्। तत्पुरुषे तन्नापेक्ष्यत इत्येव लाघवमिति। अत्र किञ्चित्–वाक्यपदीये मूले—'संसर्गो विप्रयोगश्च...' इत्ययमेव पाठः, 'संयोगो विप्रयोगश्च....' इति पाठस्तु प्रामादिक इति।

२५. ........मन्त्र इति। तथा हि कृष्णयजुर्वेदीयतैत्तिरीयशाखायाम्—'त्वष्टा हतपुत्रो वीन्द्रः सोममाहरत् तस्मिन्निन्द्र उपहवमैच्छत् तं नोपाह्वयत पुत्रं मेऽवधीरिति स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत् तस्य यदशिष्यत तत्त्वष्टाऽऽहवनीयमुपप्रावर्तयत् स्वाहेन्द्रशत्रुर्वर्धस्वेति स यावदूर्ध्वः पराविध्यति तावति स्वयमेव व्यरमत यदि वा तावत्प्रवणमासीद्यदि वा तावदध्यग्नेरासीत्स सम्भवन्नग्नीषोमावभि समभवत् स स इषुमात्रमिषुमात्रं विष्वङ्ङवर्धत स इमाँल्लोकानवृणोद्यद् इमाँल्लोकानवृणोत् तद् वृत्रस्य वृत्रत्वम्। तत्र 'इन्द्रस्य शमयिता शातयिता वा भव' इति क्रियाशब्दोऽत्र शत्रुशब्द आश्रितः, न तु रूढिशब्दः, तदाश्रयणे हि बहुव्रीहितत्पुरुषयोरर्थभेदः इति। अत्र किञ्चित्—ननु इन्द्रशत्रुशब्दस्य लौकिकत्वे स्वरप्रयुक्तयोर्गुणदोषयोः प्रसक्तिः, स्वरस्य वेदमात्रविषयत्वादिति चेत्? न, स्वरविधौ छन्दोऽधिकाराभावात्। एतावानेव भेदः—छन्दसि त्रैस्वर्यम् एकश्रुतिश्च व्यवस्थयाऽऽश्रीयते, लोके त्वैच्छिकः (द्र० शब्दकौस्तुभः)। प्रकृते तु—इन्द्राभिन्नत्वे सिद्धे सति, 'इन्द्रशत्रुर्भव'

CC-0. Sampurnanand University Collection. Digitized by eGangotri

इत्यत्रार्थे प्रतिपाद्ये, अन्तोदात्ते प्रयोक्तव्ये, आद्युदात्त ऋत्विजा प्रयुक्त इत्यर्थान्तराभिधादिन्द्र एव वृत्रस्य शातयिता (शत्रुः) सम्पन्नः। (द्र॰ प्रदी.) नात्र सम्बुद्धिप्रसक्तिः—

'सम्बोधनं न लोकेऽस्ति विधातव्येन वस्तुना।
यथेन्द्रशत्रुर्वर्धस्व यथा राजा भवेति च'।। (द्र॰ वाक्य॰ ३।१० पुरुषसमुद्देशे)

अतश्च—'सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः'।। इति। (वाक्य॰ ३, साधन॰१६३)

अत्र किञ्चित्—यद्यत्र रूढ्या रिपुवाचकः शत्रुशब्द एवाश्रीयेत, तदा बहुव्रीहितत्पुरुषयोरर्थाभेदात् पूर्वपदप्रकृतिस्वरः (बहुव्रीहौ प्रकृत्या पूर्वपदम्) अन्तोदात्तो वा (समासस्य) भवतु दोषो नास्ति, भाष्यव्यवस्थया चात्र तत्पुरुषो भविष्यतीति, तदानीं क्रियावाचकं शत्रुशब्दकल्पनम्, ततः स्वरदोषात्समाधिप्रभृतिदोषकल्पनाजल्पनाजालजालेनालमिति स एव पक्षः कथमत्र नाश्रीयत इति। 'तस्मादिन्द्रोऽबिभेदपि त्वष्टा तस्मै त्वष्टा वज्रमसिञ्चत्तपो वै, स वज्र आसीत्तमुद्यन्तुं नाशक्नोदथ वै तर्हि विष्णुरन्या देवताऽऽसीत्सोऽब्रवीद्विष्णवे हीदमाहरिष्यामो येनायमिदमिति स विष्णुस्त्रेधात्मानं वि न्यधत्त पृथिव्यां तृतीयमन्तरिक्षे तृतीयं दिवि तृतीयमभिपर्यावर्ताद्ध्यबिभेद्यत् पृथिव्यां तृतीयमासीत्तेनेन्द्रो वज्रमुदयच्छद्विष्ण्वनुस्थितः सोऽब्रवीन्मा मे प्रहरेति वा इदं मयि वीर्यं तत्ते प्रदास्यामीति तदस्मै प्रायच्छत् तत्प्रत्यगृह्णादधामेति तद्विष्णवेऽति प्रायच्छत्........,। एषा त्रैधातवीयमिष्टेर्देवतार्थमाख्यायिका। वैश्वदेवदर्शनम् (द्र॰कृ॰यजु॰ २।४।१२।१)। अन्यत्रापि यथा—

'त्वष्टा हतपुत्रो वीन्द्रं सोममाहरत्तस्मिन्निन्द्र उपहवमैच्छत्तं नोपाह्वयत पुत्रं मेऽवधीरिति....स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्तस्य यदत्यशिष्यत तत्त्वष्टाऽऽहवनीयमुपप्रावर्तयत..... 'स्वाहेन्द्रशत्रुर्वर्धस्वेति' यदवर्तयत् तद्वृत्रस्य वृत्रत्वं यदब्रवीत् स्वाहेन्द्रशत्रुर्वर्धस्वेति, तस्मादस्येन्द्रः शत्रुरभवत्......।' पूर्णिमायामग्नीषोमीयपुरोडाशविधिः। प्राजापत्यं दर्शनम्। (द्र.कृ.यजु. २।५।२।१)

२६. आवृत्त्या इति। यदि आचार्येण तन्त्रेण उभयार्थकः शब्दः प्रयुज्यते, तदानीं बोद्ध्रा आवृत्त्या अर्थौ बोद्धव्यौ। एवमेकशेषविषयेऽपि, तदुक्तम्—बोद्धुस्तु आवृत्त्या एव बोधः। (द्र॰ हलन्त्यं सूत्रे मनोरमा-बृहल्लघुशब्दरत्नम्)

२७. अधिभाष्यम् इति। 'धातुलोपः' इति नैवं विज्ञायते, धातोर्लोपो धातुलोपः, धातुलोपे इति। कथं तर्हि? धातोर्लोपो यस्मिंस्तदिदम्, धातुलोपे इति।

किञ्च—अत्र गमकत्वाज्ज्ञापकत्वाच्च व्यधिकरणपदो बहुव्रीहिः, तत्र च—श्रुतान्यपदार्थपरित्यागेन अश्रुतान्यपदार्थकल्पनायोगाद् 'आर्धधातुकम्' एव अन्यपदार्थत्वेनाश्रीयते, अत एव नपुंसकमुक्तम्। तथा च—'धातुलोपविशेष्यार्धधातुकविशेष्यता गुणवृद्ध्योरिति भावः (द्र॰ निर्णयसागरटिप्पणसमुद्धृतच्छाया)।

२८. प्रागेवेति। 'भेद्यते', 'छेद्यते', 'रोध्यते' इत्यादौ णेरनिटीति टिलोपात् पूर्वमेव लघूपधगुणे सतीष्टसिद्धिरित्यभिमानः; परन्तु 'उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधते' इति परिभाषया पूर्वं लघूपधगुणो न भविष्यतीत्याशयः, 'भिदि य ते' इत्यत्र 'सनाद्यन्ता....' इति 'भिदि' इत्यस्य धातुत्वाद् यग्रूपार्धधातुकपरकस्य णिलोपस्य सत्त्वात्। अतो बहुव्रीहिः स्वीकार्यः, तल्लाभस्तूक्त इति।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

२९. वैफल्य इति। वैफल्या:=वैफल्यादित्यर्थ:। विफलस्य भावो वैफल्यम्, तदेव वैफली, ब्राह्मणादेराकृतिगणत्वात् ष्यञ्, षित्वान्ङीष्, यचि भम्, यस्येति च, हलस्तद्धितस्य, विभक्तिकार्यम्, औचिती, साहितीत्यादिवत् प्रयोग:।

३०. बलीयांस इति। अयं भाव:—अन्तरङ्गाद् उपजीव्यांदपि निषेधो बलीयानिति बोध्यम्। यभा—स्यन्दूँ प्रस्रवणे इति धातो: कर्तरि लकारे, भविष्यत्सामान्ये लृटि, 'वृद्भ्य: स्यसनो:' इति वैकल्पिकपरस्मैपदविधानात् प्रथमैकवचने तिपि अनुबन्धलोपे शपं प्रबाध्य स्यादेशे 'स्वरतिसूतिसूयतिधूञूदितो वा' इति वेटं 'न वृद्भ्यश्चतुर्भ्य:' इति बाधित्वा, ततश्चर्त्वे 'स्यन्त्स्यति' इति रूपम्। अत्रेदं चिन्त्यते—अत्र 'न वृद्भ्यश्चतुर्भ्य:' इति इण्निषेधकम्, तत्र आत्मनेपदनिमित्ताभाव एव निमित्तम्, ततो निषेधो बहिरङ्ग:, ऊदिन्निमित्तको वेडन्तरङ्ग:, ततश्च वेट् स्यात्? तत्र समाधीयते—'निषेधाश्च बलीयांस:' इति। विधिर्निषेधस्योपजीव्य:, अभावस्य प्रतियोगीव। अन्तरङ्गादुपजीव्याच्च बलीयस्त्वादेव 'स्यन्त्स्यति' इत्यत्र न वेट्। 'न वृद्भ्य:....' इत्यत्र 'चतुर्भ्य:' इति स्पष्टार्थमेव। निषेधस्याबलीयस्त्वे तु 'अतिरात्रे षोडशिनं पात्रविशेषं गृह्णाति', 'नातिरात्रे षोडशिनं गृह्णाति' इत्यत्र 'उदिते जुहोति', 'अनुदिते जुहोति' इत्यत्रेव विकल्पापत्ति: प्रसज्येत इत्यादिमञ्जूषायां विस्तर:। परिभाषा चेयम्—'न लुमता...', 'कमेर्णिङ्' इत्यत्र भाष्ये स्पष्टम्।

३१. उपसञ्जनिष्यमाणेति। 'उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधते' इति। यथा—'दधति' इत्यादौ यद्यन्तादेशो नाकरिष्यत्तर्हि 'अदभ्यस्तात्' इत्यदादेशोऽभविष्यदिति सम्भावनायां पूर्वमेव 'झोऽन्त' इति प्रवर्तते, ततो दधतीति साधु।

३२. न कुर्वन्तीति। यथा वा—'निमित्तापाये नैमित्तिकस्यापाय:' इति। ननु कथमेतत्? न हि दण्डनाशे घटो नश्यतीति लोके प्रत्यक्षमेव। वस्तुतो निमित्तमत्रासमवायिकारणम्, तथा चासमवायिकारणनाशात् (कपालद्वयसंयोगनाशात्) घटनाश: प्रत्यक्ष एव। न्यायानुगता कारणत्रैविधी समेषु जन्येष्वद्यतनेष्वपि यन्त्रेषु। तथा चेत्थं बुधेलिमम्,




सर्वेष्वपि आधुनिकयानयन्त्रादिष्वप्येषा कारणव्यवस्था स्पष्टैवेति।

यथा Moter याने अवयवा:=Parts, समवायिकारणम्, तेषा संयोग: Tighting of parts असमवायिकारणम्, तद्भिन्नानि Mecker Tightee उपकरणान्तराणि Materials प्रभृतीनि निमित्तमिति । तत्र Tighting रूपस्य (संयोगरूपस्य) असमवायिकारणनाशात् (अभावेन) Moter यानं न चलिष्यति पदमपीति बोध्यम्।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

३३. परिभाषयेति। 'अकृतव्यूहाः पाणिनीयाः' इति। 'पाणिनीया भाविनिमित्तविनाशेऽकृतव्यूहा भवन्ति' इति सम्पूर्णस्वरूपम्। अर्थस्तु—यदि बहिरङ्गशास्त्रेणान्तरङ्गशास्त्रविनाशः पश्चात् करिष्यते, तदानीं पूर्वमेव पाणिनीया अन्तरङ्गशास्त्रप्रवृत्तिं न कुर्वन्तीति। यथा 'सदेर्लिटि क्वसौ द्वित्वाभ्यासकार्ययोः सतोः (सद् सद् वस्—एत्वाभ्यासलोपयोः) सेद् वस् इति दशायाम्, 'वस्वेकाचाद्घसाम्' इति वस इट्प्राप्तिः; परन्तु 'सेद् वस्' कृदन्तत्वादर्थवत्त्वात्प्रातिपदिकत्वाद्द्वितीयाबहुत्वे शसि अनुबन्धलोपे भत्वे सति 'वसोः सम्प्रसारणम्' इति भाविसम्प्रसारणे ततः पररूपे 'सेद् उस् अस्' इति सति वलादित्वं नङ्क्ष्यतीति, तन्मत्वा पूर्वमेव नेटः प्रवृत्तिरिति प्राङ्मतम्।

नागेशभट्टाचार्यास्तु—'सेद् वस् अस्' इति स्थिते इट्सम्प्रसारणयोः प्राप्तयोः 'लक्षणप्रतिपदोक्त'-परिभाषया सम्प्रसारणं स्वत एव पूर्वं भविष्यतीति, तेनैव वलादित्वभङ्गान्नेटः प्राप्तिरिति 'समर्थानां....' इत्यत्र 'असिद्धवद....' इत्यत्र च प्रदीप उक्तत्वान्नास्याः परिभाषायाः प्रयोजनमिति सङ्क्षेपः।

३४. संस्कार्यरूपमिति। अयं भावः—गुणविधायकं वृद्धिविधायकं च यत्तद् विधिसूत्रं भवति, तच्च संस्कार्यम्, 'इको गुणवृद्धी' इति परिभाषा सती विधिसूत्रं संस्करोतीति विध्युपकारकत्वेन गुणभूता। मीमांसकनये यथा—व्यापारेण (भावनया) प्रत्ययोपात्ते कर्ताऽऽक्षिप्यते, तस्य क्रियां प्रति गुणभावेऽपि प्राधान्यम्, यद्वा 'दध्ना जुहोति' अत्र तृतीयान्तपदोपात्तदधिगुणं प्रति अनुवादार्थं विध्युपस्थापकतया गुणभूतस्यापि होमस्य, तद्वत्प्रकृते परिभाषोपस्थित्यर्थं तत्प्रदेशभूतस्थानिपदप्रदर्शनलिङ्गतया गुणभूतयोरपि तदुपकार्यतया प्राधान्यं तयोरिति। (द्र० महाभाष्ये निर्णयसागरीयटिप्पणी—छाया)

३५. सनाद्यन्तेति। सनादयश्च द्वादश, ते च के? तत्रोच्यते—सन्-क्यच्-काम्यच्-क्यङ्-क्यषोऽथाऽऽचारक्विप्-णिङ्-यङौ तथा। यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः।। (द्र.बृ.शे.) तदेव व्यर्थं सञ्ज्ञापयतीति वैयाकरणः पन्थाः। यथा—ऋत उदित्यत्र तपरत्वं व्यर्थं सञ्ज्ञापकम्, इति चेत्? तत्रेत्थं पङ्क्तियोजना—'न विभक्तौ तुस्माः' इति सूत्रे। आदेः = आदिपदस्य (पाठक्रमादार्थक्रमस्य बलीयस्त्वेन) विभक्तिपदस्य। सार्थक्याय = शाब्दबोधाय इत्यादि। यदि, उपदेशेऽन्त्यं हलिद् न स्यात्तदा विभक्तिपदवाच्ययोः सुप्-तिङ्-(विभक्तिश्चेति सूत्रात्) शब्दयोः शाब्दबोधो न स्यात्। तत्र पकारस्य ङकारस्य चेत्सञ्ज्ञाभावे प्रत्याहारासिद्धेरिति गुह्यमूह्यमिति मम पितृदेवश्रीचरणा वैयाकरणकेशरिणः **पण्डितश्रीपशुपतिभट्टाचार्यमहोदयश्रीचरणा** इति।

३६. निष्प्रयोजनादिति। निष्प्रयोजनं वस्तु व्यर्थश्चेत्, नैव तद् दोषायेति बोध्यम्। सप्रयोजनं वस्तु अन्यथासिद्धं सद् व्यर्थं चेत्तज्ज्ञापकं भवतीति सत्समयः। स्पष्टञ्चैतदनुनासिकसञ्ज्ञासूत्रे भाष्ये। 'नैव दोषो न प्रयोजनम्' इति। अत्र किञ्चित्—एतद्दिशा 'न विभक्तौ तुस्माः' इत्यादेः सार्थक्याय उपदेशेऽन्त्यं हलित् स्यादित्यर्थ आवश्यकः..... इत्यादि कथं सङ्गटताम्? यतो हि—इदानीम् (हलिति सूत्रेऽन्त्यमित् स्याद् इत्यर्थे एव स्वीकृते) तुस्मानामित्त्वाप्राप्त्या तन्निषेधो निष्प्रयोजनः, निष्प्रयोजनस्य व्यर्थत्वं न दोषाय, यस्य प्रयोजनं विद्यमानं सदन्यथासिद्धं भवति।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

३७. ण्वुलीति। अत्र युवोरनाकौ विहितौ न तु 'युव्योरनाकौ' इति। एवम् 'अहंशुभयोर्युस्' इत्यपि। इदं भावः—तेन 'कु' इत्यत्रानुनासिकत्वं कल्प्यम्। 'अहंशुभयोर्युस्' इत्यत्र 'यु' इत्यस्य अकादेशो न, सित्सामर्थ्यात्। अन्यथा अकि कृते 'अहमकः' इति स्यात्, इष्यते सित्वात्पदत्वेऽनुस्वारे 'अहंयुः' इति, सत्यपि तन्न स्यादिति सित्त्वं व्यर्थं भवेदिति।

३८. 'पापच्य अक' इति। अत्र यथाप्राप्तं सवर्णदीर्घम्, 'अतो गुणे' इति पररूपं बाधित्वा अग्रे प्रक्रियेति बोध्यम्। इयं परिभाषा खण्डिता। तथा हि—'युष्मभ्यम्' इत्यादौ 'अभ्यम्' इति च्छित्वा 'शेषे लोपः' इत्यन्तलोपे 'अतो गुणे' इति रूपं सिद्धम्।

३९. 'पापच्' इति। यङ्लुगन्तात् 'पापच्' इत्यस्मात् ण्वुलि 'पापाचकः' इति रूपमिति विवेक इति निस्सन्देहं स्वीकरणीयम्, प्रक्रिया तु मूले स्फुटेति दिक्।

४०. उवङीति। 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इति श्नुप्रत्ययान्तस्याङ्गस्य धातोरिवर्णोवर्णान्तस्य 'भ्रू' इत्येतस्य च इयङ् उवङ् इत्येतावादेशौ भवतोऽजादौ प्रत्यये परतः। (द्र०काशिका-६।४।७७) अत्र इश्च उश्च यू तयोर्य्वोः, ह्रस्वयोरिदं ग्रहणम्, दीर्घयोरपि कार्यं भवति सवर्णग्रहणात् (द्र.-पदमञ्जरी)। अत्राण् गृह्यमाणः सवर्णान् ग्राहयतीति ह्रस्वौ गृह्यमाणो दीर्घावपि ग्राहयतः, तदन्तस्यापि भवतः (द्र. न्यासः)।

४१. अङ्गकार्य इति। अयं भावः—'अङ्गवृत्ते पुनर्वृत्तौ अविधिः' इति हि परिभाषास्वरूपम्। अङ्गे=अङ्गाधिकारे वृत्तं=निष्पन्नं यत्कार्यम्, तस्मिन् सति पुनरन्यस्याङ्गकार्यस्य वृत्तौ अविधानं=विधानं न भवतीत्यर्थः। युष्मभ्यम् इत्यत्र 'भ्यसो भ्यम्' इति च्छेदे 'शेषे लोपः' इति दलोपे, ततः पुनः 'बहुवचने झल्येत्' इति अङ्गाधिकारीयं कार्यान्तरं न भवतीति।

४२. सञ्ज्ञापूर्वकेति। एषा भाष्येऽदृष्टा, अतः परिभाषेन्दावनादृता। इत्थं 'स्तिपा शपा....', 'आगमशास्त्रमनित्यम्', 'गणकार्यमनित्यम्', 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्', 'नञ्-घटितमनित्यम्' इत्यादिपरिभाषा भाष्येऽदृष्टाः, अतश्च परिभाषाव्याख्याता अप्यनादृताः। आसामन्यथासिद्धत्वम्, एतत्साधितप्रयोगाणामनभिहितत्वं वेति नागेशहृदयमिति।

४३. या इति। 'या प्रापणे' (अ.प.से.) प्रापणं गतिः। 'वा गतिगन्धनयोः' (अ.प.से.) गन्धनं सूचनम्। तदुक्तम्—'या प्रापणे समाख्यातो वा गतौ गन्धनेऽपि' इति (द्र. सूर्यपुरस्थ-रैक्वजातीयब्राह्मणज्योतिर्वित्केशवात्मजकृष्णशङ्करशर्मणा गर्गगोत्रेण अष्टाविंशत्युत्तराष्टादशशतमितशालिवाहनाब्दे राधमासि सितदले तृतीये गुरुवारे कृता धातुपाठकारिकादाधिमथटिप्पणीसहितसंस्करणे)। अत्र किञ्चित्—यदुक्तं गन्धनम्=सूचनम्, तत्तु हिंसात्मकम्, 'गन्ध अर्दने' 'अर्द हिंसायाम्' इति चुरादौ। 'गन्धनावक्षेपण-सेवन-साहसिक्य-प्रतियत्न-प्रकथनोपयोगेषु कृञः' (१।३।३२) इत्यादौ यथा। धातूनामनेकार्थत्वे इमान्यपि प्रमाणानीति दिक्।

४४. द्योत्यार्थेनेति। व्यङ्ग्य-लक्ष्य-शक्य-द्योतक-अनुवायेति भेदात्। तेषु द्योतकस्तु शक्त्याधायकः, यथा—उपसर्गाः। यथा—गच्छति अवगच्छति, अत्र 'अव' इति द्योतकः, स च गमेरेव निहितार्थं द्योतयति। अनुवादकस्तु प्रकृत्यर्थमेवानुवदति। यथा—'द्वौ'। अत्र द्वित्वरूपं प्रकृत्यर्थमेव विभक्तिरनुवदति। अनन्वितार्थकविभक्तिकल्पनापेक्षयाऽ-

CC-0. Sampurnanand University Collection. Digitized by eGangotri

नुवादकविभक्तेरेव न्याय्यत्वाद् द्विशब्दादौ विभक्तिः। 'पञ्चकं प्रातिपदिकार्थः' इति पक्षे विभक्तयो द्योतका एव। द्योतकानुवादकाभ्यां पुनरुक्तिर्न भवति। साक्षादर्थोपस्थापिका शक्तिः, तत्र निष्प्रयोजनं द्विरुक्तिश्चेत्पुनरुक्तिः, अन्यथा तत्रापि द्विरुक्ति; यथा—'नयने तस्य हि नयने' इत्यादौ। 'व्यतिलुनीते', 'गार्ग्यायणी' इत्यादौ वि-अति आत्मनेपदैः, फङीष्भ्याञ्च द्योतकत्वेन न पुनरुक्तिरिति। कुत्रचित्तु द्योतना इति 'औपसन्दानिकी' इति शब्देनोच्यते। एवञ्च औपसन्दानिकी-शक्तिरेव द्योतना (द्र. वर्धमानकृतकिरणावली-प्रकाशः)। उपसन्दीयतेऽसाविति औपसन्दानिकी। कर्मसाधनोऽयं शब्दः। उपसन्दानम्= समभिव्याहृतपदम्, तद्वृत्ति शक्त्युद्बोधकमिति। (द्र. बृहद्वैयाकरणभूषणम्, रूपाली-टिप्पणी, पृ॰ २१५ मत्कृतं संस्क॰) एवञ्च—मुद्रितवैयाकरण-सिद्धान्तमञ्जूषायामेतत्कृते 'औषसन्दानिकी' इति दृश्यमानो मूर्धन्यमध्यपाठोऽशुद्ध इति।

४५. 'आदेः परस्य' इत्यस्यायमर्थः—परस्य यद्विहितं तत्तस्यादेर्बोध्यम्। अत्र अल इत्यनुवर्तते 'अलोऽन्त्यस्य (१।१।५२) इति सूत्रात्। परत्वेन निर्दिष्टस्य अल आदेरित्यर्थः। आदेशविधौ परस्येति षष्ठ्यन्तत्वेन उपस्थितिर्हि एतदुपस्थितौ लिङ्गम्, एवञ्चादिरपि प्रत्यासत्तिन्यायेन परत्वेन निर्दिष्टस्यैवेति ज्ञेयम्।

४६. '........क्यप्-अलोपे प्रतिषेध इति। मुद्रिते बृहच्छब्देन्दुशेखरे 'यङ्-यक्-क्यप्-अलोपे....' इति पाठः, स च चिन्त्यः, भाष्ये—'यङ्-यक्-क्य-वलोपे' इत्येव पाठः, वलोपे जीरदानुरित्युदाहरणाच्च, अत्र वकारोऽकारविशिष्ट इत्यपि कैयटे स्पष्टम्, कथमन्यथा स्निविर्व्यावर्त्येत इति तेनैवोक्तत्वाच्च।

४७. कुशकाशेति। कुशकाशावलम्बनन्यायस्तु हिन्द्याम्—'डूबते को तिनके का सहारा' इत्याभाणकसमानार्थः।

४८. तोतोर्तीति। 'तुर्वी हिंसायाम्', यङ्लुगन्तादस्मात् कर्तरि लकारे वर्तमाने लटि प्रथमैकवचने इडभावे रूपम्, अतिशयेन पुनः पुनर्वा हिंसतीत्यर्थः। कौमुद्यामिदमेव प्रत्युदाहृतम्—'इति नेह गुणनिषेधः, तिबादीनामनार्धधातुकत्वादिति बृहच्छेखरेऽपि—ननु आर्धधातुके इति व्यर्थम्, बहुव्रीहिस्तु तं विनापि 'एकाचो द्वे' इतिवद् भविष्यतीति चेत्? न, 'तोतोर्ति'-व्यावृत्त्यर्थत्वात्। यथा ममैव—'तोतोर्ति प्रतिमानवं हि सुषमा सारस्वती दुर्मदम्'।।

(द्र. सारस्वती-सुषमा, स्वर्णजयन्तीविशेषाङ्कः, पृ॰ १७)

४९. भाषायामिति। एतच्च नागेशमते। दीक्षितमते तु—भाषायामपि एतेषां प्रयोगः, अत एव 'चरीकर्ति बरीभर्ति सञ्जरीहर्ति नित्यशः' इति कौस्तुभमङ्गलारम्भः सङ्गच्छते। भट्टिकाव्ये लौकिकप्रयोगमात्रोदाहरणके—'यदि रवौ वरीवर्दि कोकिलो रोरवीति च। मयूरोऽपि नरीनर्ति मरीमर्मि तदा प्रिये'।। इति दृश्यते।

५०. एषिकेति। एषा एव एषिका। 'न सामिवचने' (४।५।४) सूत्रज्ञापितम्, तत्रत्याख्यानपक्षे च 'यावादिभ्यः कन्' इत्याकृतिगणीयानुमितं स्वार्थिकं कनं प्रबाध्य, 'अव्यय-सर्वनाम्नामकच् प्राक्टेः' इत्यकचि, 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति परिभाषणात् सर्वनामसंज्ञाप्रयुक्तकार्यविभक्तिकार्येषु रूपसिद्धिः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

५१. अत्र—'नलोप आर्धधातुके' इति प्रथमश्लोके वर्णच्छन्दोऽन्तर्गतसमपादच्छन्दोऽन्यतम-षोडशाक्षरपादकाष्टजात्यन्तर्गतपञ्चचामराख्यं छन्दः, तल्लक्षणं यथा—'प्रमाणिका पदद्वयं वदन्ति पञ्चचामरम्' इति। प्रमाणिकाच्छन्दस्तु वर्णच्छन्दोऽन्यतमसमपादच्छन्दोऽन्तर्गतानुष्टुब्जातिकम्, तल्लक्षणं यथा—'प्रमाणिका जरौ लगौ' इति।

५२. अत्र उपजातिश्छन्दः। तथा हि—अत्र प्रथमद्वितीययोः 'चित्र'नामकं छन्दः, तल्लक्षणं तु—चित्रसञ्ज्ञमीरितं समानिका पदद्वयमिति। समानिकालक्षणन्तु—'ग्लौ जरौ समानिका' इति। तृतीयतुर्ययोश्च प्रमाणिकाच्छन्दः, तल्लक्षणमुक्तमेव। एवञ्च— 'इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम' इत्युक्त्या उपजातिश्छन्दः। अत्र च षष्टिजातिकयोरेव द्वयोः चित्रपञ्चचामरयोः समानजातिकयोः षोडशाक्षरकपादयोर्मेलनात् शुद्धो जातिः। (द्र० श्रीमद्भागवतम्, गुर्जरस्थविद्याहितनिधिसभाप्रकाशितोपलब्धसमस्तव्याख्यासहितं संस्क. दशमस्क० विवरणम्)।

५३. अत्र तु चित्रनामकं छन्दः, स्पष्टमेवेति।

वीणापाणिमहो वन्दे मातरं पुत्रवत्सलाम् ।
तातं पशुपतिं वन्दे संस्कृतप्राणमादरात् ।। इति।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

# कर्मसिद्धान्तविवेचनम्

**डॉ. हरिप्रसाद-अधिकारी**
प्राध्यापक:
तुलनात्मकधर्मदर्शनविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसी



मनसाप्यचिन्त्यरचनारूपेऽस्मिन् जगति मुह्यन्ति तावद् बुधा अपि का कथा पुनरज्ञानोपहतचित्तानां सामान्यजनानाम्? अत एवाह भगवान् श्रीकृष्णो गीतायामर्जुनमुद्दिश्य—

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात्[१] ।।

लोकेऽपि तावद् दृश्यत एवानुपदं लोका कर्माकर्मनिर्धारणे मोहमुपयान्त्येव। भारतीयपरम्परायां कर्मसिद्धान्तस्य महत्त्वं सर्वोपरि राजते। अतस्तद्विज्ञायात्र दिङ्-निर्देशः क्रियते—कर्मणां सम्बन्धोऽनेकजन्मभिः सह जायतेऽथवैकेन जन्मना सह? जीवनेऽस्मिन् पूर्वजन्मकृतकर्मणां फलागमो जायतेऽथवास्यैव जन्मकृतकर्मणः? एवं विधाः प्रश्नाः सृष्टिकालत एव मानवमनांसि समुद्वेलयन्ति। समये समये बहुभिश्चिन्तकैर्मुनिवरैश्चास्य प्रश्नस्य समुचितोत्तरान्वेषणाय यत्ना अप्यनुष्ठीयन्ते, परमिदानीं यावत् सर्वमान्यं निर्दुष्टं समाधानं नासादितमिति मन्यन्ते विचारकाः सम्प्रत्यपि।

कर्मफलसम्बन्धे चार्वाक-जैन-बौद्ध-सांख्ययोग-न्यायवैशेषिक-पूर्वोत्तरमीमांसादिषु वैशद्येन विवेचितं वर्तते। प्रस्तुतेऽस्मिँल्लेखे भारतीयदर्शनानां संस्कृतीनां परम्पराणाञ्च पृष्ठभूमिमनुश्रित्य कर्मसिद्धान्तो लोकव्यवस्था चेति विषयो विवेचयिष्यते।

लेखारम्भ एकः प्रश्नः समुद्भावित आसीद् यत् कर्मसम्बन्धोऽनेन जन्मनैव भवत्यथवानन्तजन्मभिः? प्रसङ्गेऽत्र भारतीयपरम्परायां प्रायः सम्मानितं मत-मित्थमस्ति—

---

१. गीता-४।१६।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ।
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।।

यदि कर्मसम्बन्धः केवलमेकेन जन्मना भवेत्तदा मान्यतेयं कथं सुरक्षिता तिष्ठेत्? अतः कर्मणां महत्त्वमस्तित्वं वा न केवलमेकजन्मसम्बद्धमपि त्वनेकजन्मसम्बद्धमतिफलितम्। परन्तु परम्परायामिहैवास्मिन्नेव जन्मनि सर्वं भोक्तव्यमिति सिद्धान्तोऽप्यवलोक्यते। तत्प्रमाणन्तु—

त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः ।
अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते ।।

अत्र तावदिहैवेति दार्ढ्यात्, न त्वन्यत्र परलोकादिष्वित्यप्यवगम्यते। यथा शास्त्रेषु स्वर्गलोक-नरकलोक-वैकुण्ठलोकानां कल्पना वर्तते, तथैव बहुत्रास्मिन्नेव लोके सर्वमस्तीत्यपि वर्ण्यते। यथोक्तं श्रीमद्भागवते—

अत्रैव नरकः स्वर्ग इति मातः प्रचक्षते ।
या यातना वै नारक्यस्ता इहाप्युपलक्षिताः[1] ।।

ईश्वरो जीवसृष्टिं कर्मानुसारमेव विधत्त इत्यस्ति पारम्परिकं मतम्, परं सर्वारम्भे कर्मणामप्यस्त्वित्वाभावात् कथमेतत् सम्भवतीति प्रश्नो जागर्ति चेतसि। कर्मणामनादित्वस्वीकारेणास्य प्रश्नस्य समाधानं क्रियते सर्वैः। अनादिसमाधानमप्यस्माकं चिन्तनशक्तिदारिद्र्यमेव व्यनक्ति। पूर्वकर्माधारेण जीवो जननमरणादिकर्मसु प्रवर्तत इत्यपि प्रतिपादितं श्रीमद्भागवत एव—

कर्मणा दैवनेत्रेण जन्तुर्देहोपपत्तये ।
स्त्रियाः प्रविष्ट उदरं पुंसो रेतः कणाश्रयः[2] ।।

एवंविधानि परस्परं विरुद्धवाक्यानि सिद्धान्ताश्च शास्त्रेषूपलभ्यन्ते। सर्वशास्त्राणां समालोडनमन्तरा न शक्यते समासादयितुं किमपि तत्त्वम्। एतदर्थं भारतीयदर्शनानां विहङ्गावलोकनं क्रियतेऽत्र। लोकव्यवहारोऽयं यदि पूर्वकर्मनियन्त्रितो वर्तत इति स्वीक्रियते तदापि बहवोऽनुत्तरणीयप्रश्ना जाग्रति परितः। पूर्वशरीरपातानन्तं किं तत्त्वमवशिष्यते? यद् व्यवस्थामिमां सञ्चालयति? प्रश्नस्यास्य समाधाने नैकमत्यं बिभ्रति भारतीयदर्शनानि। कुत्रचित् प्रकृतिः, कुत्रचिदीश्वरः, कुत्रचिच्च स्वयं कर्मैव व्यवस्थापकत्वेनापि स्वीकृतम्।

१. श्रीमद्भागवते तृतीयस्कन्धः २९ श्लोकः।
२. तत्रैव ३१ अध्याये १ श्लोकः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

आत्मवादिदर्शनेषु व्यवस्थेयं सारल्येन सञ्चलति, परमनात्मवादिनो बौद्धा अपि कर्मफलव्यवस्थामङ्गीकुर्वन्ति। किञ्च मानवेन जीवनपर्यन्तं यानि कर्माणि क्रियन्ते, प्रायस्तेषां सम्बन्धोऽनेनैव जीवनेन भवति। मुख्यतः स्वभोजनावाससुखसाधन-प्रभृतीनां सङ्कलन एव गच्छति सर्वं मनुष्यजीवनम्। कतरत् कर्मास्ति तद् यद् भविष्यस्य कृते क्रियते? यद्यस्मिन् जन्मनि परजन्मनः कृते न क्रियते किमपि, तदा पूर्वजन्मनि कथं कृतं स्यात्? एतेषां प्रश्नानामप्युत्तरं श्रद्धागुहायामेवोपलभ्यन्ते।

यद्यपि समस्तभारतीयदर्शनानां परमोद्देश्यं दुःखनिवृत्तिर्मोक्षावाप्तिश्चास्ति, तथापि प्रसङ्गतोऽत्र कर्मफलसम्बन्धे लोकव्यवस्थाविषये च बहुविवेचितमास्ते। निष्कर्षतः कर्माणि बन्धनकारकाणि भवन्तीति मतं सर्वे समामनन्ति। कर्मविवेचक-गीताशास्त्रे प्रतिपादितम्—

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा।
इति मां योऽभिजानाति कर्मभिर्न स बाध्यते[1]॥

एवमेव ज्ञानेन कर्मक्षयो जायते कर्मक्षयाच्च मोक्षोऽधिगम्यत इति मतं प्रकटितं श्रीमद्भागवते—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे[2]॥

इत्थं कर्म मोक्षमार्गस्य बाधकत्वेन सर्वत्रोपस्थापितम्। एवमेवेश्वर-पुनर्जन्म-वेदप्रामाण्याधारेणास्तिकनास्तिकानां विभाजनं कृतं वर्तते। वेदप्रामाण्याधारेणैव चार्वाक-जैन-बौद्धा नास्तिककोटौ समायान्ति। ईश्वराधारेण तु चार्वाक-जैन-बौद्ध-सांख्य-पूर्वमीमांसादर्शनानि नास्तिकानि भवन्ति। कर्माधारेण तु केवलं चार्वाकदर्शनमेव नास्तिकत्वं भजते। अपराणि तु कर्मफलस्वीकारात् पुनर्जन्म-स्वीकाराच्चास्तिकानि भवन्ति।

एतेषु दर्शनेषु पूर्वमीमांसादर्शनं कर्मसिद्धान्तविवेचनप्रसङ्गे महत्त्वपूर्णम्। मीमांसायां कार्यकारणसम्बन्धविषये शक्तिसिद्धान्तः स्वीक्रियते। बीजं स्वकीया-दृश्यशक्तिबलेनैवाङ्कुरोत्पादनसमर्थं जायते। शक्तिरहितं बीजमङ्कुरोत्पादनाय नालं भवति। एवमेवाग्नौ दाहकताशक्तिः, शब्देऽप्यर्थबोधनशक्तिः,प्रकाशे भासकताशक्ति-रित्यादिक्रमेण मीमांसकाः स्वकीयं शक्तिसिद्धान्तं स्थापयन्ति। एतच्छक्त्याधारेणैव मीमांसादर्शनं जटिलतमस्यास्य कर्मसिद्धान्तस्य व्याख्यानं करोति। अत्र प्रश्नोऽयं

---

१. गीता-४।१४;  २. श्रीमद्भागवते-२।२१।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

समुदेति यत् मनुष्यकृतकर्मणां नाशस्त्वस्मिन्नेव लोके जायते, तर्हि कथं विनष्टं कर्म परलोकादिषु फलं प्रयच्छति? मीमांसका अस्याः समस्यायाः समाधानमपूर्वपदार्थकल्पनया कुर्वन्ति। तन्मतानुसारं यज्ञानुष्ठानानन्तरकस्यामेपूर्वपदार्थस्य जन्म जायते। इयञ्च सा शक्तिरस्ति या यथावसरं फलं प्रयच्छति। लौकिकानां वैदिकानाञ्च सर्वेषां कर्मणां फलानि सञ्चितानि भवन्तीति शास्त्रे स्वीक्रियते—

नैवाकृतिः फलति नैव कुलं न शीलं
विद्यापि नैव न च यत्नकृतापि सेवा ।
भाग्यानि पूर्वतपसः किल सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ।।

यद्धि बौद्धदर्शनं वेदेश्वरात्मादिपूर्वस्वीकृतविषयान् न स्वीकरोति, तदपि कर्ममहत्त्वं स्पष्टतया स्वीकरोति। अमुमेव कर्मसिद्धान्तमाधारीकृत्य बौद्धदर्शने लोकव्यवस्था व्यवस्थाप्यते। यथैकस्य बालकस्योत्पत्तौ तस्य जीवनस्यारम्भः। वस्तुतः किमस्ति बालकः? शरीरमनसोः समुदायः। किमस्ति शरीरम्? असंख्यपरमाणूनां समुदायः। प्रतिक्षणं परिवर्तनशीला अपि परमाणवः स्थानापन्नत्वात् पूर्वजीवनसाम्यतां गतिशीलतां च द्योतयन्ति।

अस्यैवाधारेण कस्यापि जनस्य जीवनस्याध्ययनं कर्तुं शक्यते। एवं कृते तज्जीवनं नूनं पूर्वकृतकर्मप्रभावितं समासाद्यते। यद्यपि बाल्यकालादारभ्य वृद्धावस्थां यावत् शरीरे नैकानि परिवर्तनानि जायन्ते, तथापि कार्यकारणशृङ्खलाया अविच्छिन्नरूपेण प्रवहमानत्वात् स एवायं जन इति प्रत्यभिज्ञा जायते। यदा हि वर्तमानं जीवनचक्रमिदमेतावत्कालं यावद् व्यवस्थितरूपेण कार्यकारणसिद्धान्ताश्रितं भवति, जीवने क्वापि किमप्याकस्मिकं नावलोक्यते, सर्वत्रैव तारतम्यमयी सङ्गतिरवलोक्यते, तदाऽत्र पूर्वकृतकर्मपरिणामस्वीकरणमेवोचितं युक्तियुक्तञ्च। नो चेदाकस्मिकतावादः समाश्रयणीयो भविष्यति, यस्य हि जीवने नैकमप्युदाहरणं समासाद्यते।

अत्र तावत् कोऽपि प्रश्नमुद्भावयितुं प्रभवति यद् मातापित्रोः शरीराभ्यां स्वशरीरानुगुणं शरीरमुत्पाद्यते, एवमेव सन्ततेर्मनोबुद्ध्यादीनां निर्माणमपि कथन्न मातापितृभ्यां जायते? प्रश्नोऽयं पूर्णरूपेण युक्तियुक्तो न वर्तते, यतो हि यदि बुद्ध्यादीनामप्युत्पत्तिर्मातापितृभ्यां स्वीक्रियेत तदा बुद्धिमतां बुद्धिमत्य एव सन्ततयः स्युः, नावलोक्यते एवंविधं साम्यं लोके। यदि जीवनप्रवाह इदं जीवनमतिक्रम्य पूर्वापरसम्बद्धः स्वीक्रियते, तदाऽस्याः समस्यायाः समाधानं जायते। पुनरत्र निष्कर्षरूपेणेदं वक्तुं शक्यते यत् पूर्वकृतकर्मणैव परवर्तिजीवननिर्माणं जायते।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

पूर्वसंस्कारसम्पन्नो बालक एव कुत्रचिद् मन्दतां कुत्रचिच्च तीव्रतां बिभर्ति। यथा बाल्यकालेऽधीतं संस्काररूपेण जीवनपर्यन्तं तिष्ठति, तथैव बाल्यकाले स्वतः स्फूर्तप्रतिभा पूर्वजन्मसम्बद्धा वर्तते। इत्थमाकस्मिकतादोषात्त्राणमविच्छिन्नजीवन-प्रवाहसिद्धिश्च जायते।[१]

अनेन विवेचनेनेदं निर्गलितं यत् कर्मसिद्धान्तप्रतिष्ठापनाय जीवनप्रवाह-नित्यताङ्गीकर्तव्या। जीवनप्रवाहनित्यतां विना कर्मवादस्य न कमपि युक्तियुक्त-तात्पर्यमभिव्यज्यते। किं नित्यात्मनोऽस्तित्वं विनापि जीवनप्रवाहनित्यता सम्भाव्यते? वैदिकदर्शनदृष्ट्या त्वात्मनो नित्यत्वात् स एवातीतवर्तमान-भविष्यज्जीवनानामधिष्ठानभूतः, परं बौद्धसिद्धान्ते नित्यात्मनोऽस्तित्वाभावा-ज्जीवनप्रवाहनित्यताव्यवस्था कठिनतरा प्रतीयते; किन्तु बौद्धसिद्धान्ते आत्मनो नित्यास्तित्वं विनापि जीवनप्रवाहनित्यता व्यवस्थाप्यते। तद्दृष्ट्या जीवनमिदं तृष्णामूलकमस्ति। अतो मनुष्यः स्वकीययैव वासनया परिभावितः सन् भवचक्रमाध्यमेन जन्ममृत्योः परिवर्तनशीलचक्रे पतितो जायते। ईश्वरवादिनोऽपि प्राय एवमेव मतं प्रकटीकुर्वन्ति यदीश्वरः केवलं जीवकर्माधोरण तदनुकूल-जन्मादिकार्याणि सञ्चालयति, न तु स्वपक्षतः किमपि शुभमशुभं वा करोति। यद्यप्युपर्युक्तकथनद्वयमेवानवस्थादोषरहितं नास्ति, तथापि कर्ममहत्त्वन्तूभयत्रापि समानरूपेण राजत इति फलितम्।

अत्रेदमप्यवगन्तव्यं यत् कर्मसिद्धान्तो लोकव्यवस्था च न केवलं सीमितेऽर्थे ग्राह्येऽपि तु सर्वभूमण्डलव्यवस्थाऽथ च तत्र कर्मसिद्धान्तस्यान्वेषणं स्पष्टी-करणञ्चावश्यकम्। यतो हि कर्मसम्बन्धो न केवलं चेतनैः सह, अपि त्वचेतनपदार्था अपि कर्मसम्बद्धा भवन्ति। इममेव कर्मसिद्धान्तमङ्गीकृत्य नैयायिकाः—'क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वाद् घटवत्' इति तर्केणेश्वरसिद्धिं कुर्वन्ति[२]। अस्तु, कर्ममहत्त्वं प्रत्यक्षतयापि सिध्यति। लोके प्रायः शुभाशुभानां कृतकर्मणां फलं दृष्टिगोचरतां याति। स्वकार्यसाधनाय कर्माचरणमावश्यकमिति नीतिशास्त्रेऽप्युल्लिखितम्—

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः।।

सृष्टौ वर्तमानाः सर्वेऽपि पदार्थाः परस्परसम्बद्धा भवन्ति। अतो निरपेक्षरूपेण केवलमेकस्य वस्तुनो व्याख्या रहस्योद्घाटनं वा न कर्त्तुं शक्यते।

---

१. बौद्धदर्शने, महापण्डितराहुलसांकृत्यायनस्य।
२. न्यायसिद्धान्तमुक्तावल्याः प्रारम्भे।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अतो हेतोः सम्यग्रूपेण कर्मसिद्धान्तावबोधाय—पुनर्जन्म-आत्मा-ईश्वर-लोक-परलोक-धर्माधर्म-कुशलाकुशलादिविषयाणां सम्यग्ज्ञानमावश्यकमस्ति।

एवमेव कर्मणामपि भवन्ति बहुविधा विभेदाः। ऐच्छिकमनैच्छिकं स्वाभाविकमिति कर्मणां मुख्यतया भेदत्रयं स्वीक्रियते। तत्र केवलमैच्छिककर्माण्येव शुभाशुभफलव्यवस्थापकानि भवन्ति, न तु स्वाभाविकानि, अनैच्छिकानि वा। स्वाभाविककर्माण्युद्दिश्यैवाह श्रीकृष्णः—

न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः[1] ।।

एवमेव—

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसङ्ग्रहमेवापि सम्पश्यन् कर्तुमर्हसि[2] ।।

इत्थं वैदिका बौद्धाश्च समभावेन कर्ममहत्त्वं स्वीकुर्वन्ति। गौतमबुद्धोऽपि स्पष्टमाह धम्मपदे—'न जच्चा वसलो होति न जच्चा होति ब्राह्मणो। कम्मुना वसलो होति कम्मुना होति ब्राह्मणो'।।

एतद्विवेचनाधारेणेदं वक्तुं शक्यते यत् संसारेऽवस्थितैः सर्वैः मनुष्यैरवश्यमेव स्वकर्तव्याचरणं विधेयम्। इहलोके परलोके च कर्ममहत्त्वमविच्छिन्नरूपेण राजते। पूर्वजन्मकर्मैवाद्य भाग्यरूपेणास्माकं पुरस्तात् समुपैति। एवमेवाद्यतनीयं कर्मापि न केवलमस्य जीवनस्य कृते लाभप्रदमपि त्वागामिजीवनस्य कृते प्रेरणाप्रदं भविष्यति। यद्यपि भारतीयशास्त्रेषु भक्तिज्ञानकर्मणां सम्बन्धे परस्परं विरुद्धमतानि सन्ति, तथापि सूक्ष्मेक्षिकया तदनुशीलने कृते 'एकं सद् विप्रा बहुधा वदन्ति' इति निष्कर्षः समासाद्यते। ज्ञानकर्मणोर्मनोरमः सम्बन्धः साधितो वर्तते योगवासिष्ठे—

उभाभ्यामपि पक्षाभ्यां यथा खे पक्षिणां गतिः ।
तथैव ज्ञानकर्मभ्यां जायते परमं पदम्[3] ।। इति।



१. गीता-३।५; २. तत्रैव-३।२०।
३. योगवासिष्ठः - १।८।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# अद्वैते प्रपञ्चोपादानत्वविमर्शः


## डॉ. रामकिशोरत्रिपाठी

व्याकरणविभागाध्यक्षः

श्रीमाथुरचतुर्वेदसंस्कृतमहाविद्यालयस्य

डैम्पियरनगरम्, मथुरा




अत्यद्भुतं विश्वविधानमूलं यच्छाश्वतं दृष्टिपथं न याति ।
मिथ्यापदार्थः प्रतिभाति लोके सत्यानृतं दर्शनशास्त्रगम्यम् ।।
मोहो जनान् नूनमुपैति बन्धं रागप्रमत्तो मतिमाजहाति ।
द्वैषस्वभावाद् धृतिसन्निवासस्तन्नाशहेतुश्च भवत्यद्वैतम् ।।
अज्ञानं हि प्रपञ्चस्य निमित्तकारणं स्मृतम् ।
विवर्तेन परं ब्रह्म तदुपादानमुच्यते ।।

जन्मजन्मान्तरवासनाशक्तहृदयत्वान्नित्यानित्यवस्तुविवेकशून्यमतीनां लोकेषणा-दारेषणापुत्रेषणावित्तेषणादिमोहकलितमनसां ममेदमस्याहमिति स्वाज्ञानानियत-द्वैविध्याशक्तपामराणामुद्धारार्थं परमकारुणिकहृदयैस्तथ्यातथ्यविवेचनकुशलैः सर्वशास्त्रविशारदैः सनातनधर्मरक्षणतत्परैर्लोकहितेषणालब्धजनिभिः सर्वदा प्राणिमात्रस्य कल्याणचिन्तकैर्वेदान्तदर्शने प्रसिद्धगीतोपनिषद्ब्रह्मसूत्रादिप्रस्थानत्रये विहितभाष्यत्वेन लब्धाचार्यपदवीकैः परिव्राट्प्रमुखैः शङ्करैर्भेदबुद्ध्योत्पन्नं द्वैतमतं निरस्य सकलभेदहीनमद्वैतमतमुद्धृतम्। द्वैतं नाम द्वाभ्यां प्रकाराभ्यामितं ज्ञातं द्वीतं द्वीतमेव द्वैतम् (स्वार्थेऽण्प्रत्ययः) स्वसजातीयविजातीयस्वगतभेदशून्यस्याद्वयस्य सर्वविकारहीनस्यानाद्यनन्ताव्ययाक्षरस्वरूपस्य ब्रह्मणो जीवेश्वररूपेण प्रकृति-विकृतिरूपेण भेदात्मकज्ञानमेव द्वैतपदेनाभिधीयते। यद्वा द्वयोर्भावो द्विता तदेव द्वैतं तदात्मकज्ञानाश्रितमिति। न द्वैतमद्वैतम्।

द्वैताभावः (भेदाभावः) तदस्यास्तीति अद्वैतं ब्रह्म (निर्धर्मकम्)। तथा चोक्तम् 'शिवमद्वैतं तुरीयं मन्यन्ते'[१], 'एकमेवाद्वितीयं ब्रह्म'[२], 'सर्वं खल्विदं ब्रह्म'[३], 'नेह नानास्ति किञ्चन'[४], 'आत्मा वा इदमेक एवाग्र आसीत्'[५]।

---

१. बृहदा. ६।२।६; २. छान्दो. ६।२।१।

३. मा.उप.म., २; ४. कठोपनिषद् २।१।११; ५. ऐत० १।१।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अथवा द्वाभ्यां परस्परविलक्षणाभ्यां प्रकाराभ्यां स्वतन्त्रसत्त्वपरतन्त्रसत्त्वाभ्यां चेतनाचेतनत्वादिभ्यां चेतं ज्ञातं वस्तु द्वीतमित्युच्यते, तदेव द्वैतम्। अत्र द्वैतपदं भेदात्मकज्ञानपरम्। द्विशब्दश्चानेकार्थस्य बोधकः। अतश्चिदचिदीश्वरभेदैस्तदवान्तरभेदैर्जीवप्राकृताप्राकृतकालेश्वररूपैस्तदवान्तरभेदैश्चेदं ज्ञातं वस्तु द्वीतं तदेव द्वैतमिति। न द्वैतमद्वैतं द्वैताभाव इत्यर्थः। नञ्तत्पुरुषसमासः। को ह्यत्र नञर्थः, अब्राह्मणमानयेत्यत्र ब्राह्मणभिन्नब्राह्मणसदृशमित्यर्थवद् द्वैतभिन्नद्वैतसदृशमर्थ इति चेत्, प्रतियोगिविधया द्वैतस्यापि सत्तास्वीकाराद् द्वैतापत्तिर्दुर्वारा स्यात्। अनुदरा कन्येतिवदल्पत्वमिति चेन्नाल्पद्वैतस्वीकारापत्तेः। तदन्यत्वार्थस्वीकारेऽपि द्वैतापत्तिः। अप्राशस्त्यार्थेऽपि प्रतियोगितया द्वैतस्य प्रतीतेः। विरोधे हि धर्माधर्मवद् द्वैताद्वैतयोः समानसत्ताकत्वेन द्वैतमेवापद्येत। अतोऽत्र नञर्थोऽभावमात्रम्, ब्रह्मणि सार्वत्रिकद्वैताभावस्य श्रुतिसिद्धत्वात्। 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्'[1], 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः'[2]।

'अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते।
तेषामुभयथा द्वैतं तेनायं न विरुध्यते'[3] ।।

अविद्यावशाद्धि निर्गुणे निर्विकारे निरवयवेऽद्वये ब्रह्मणि प्रपञ्चादिद्वैतमारोप्यते। अद्वैतमित्यस्यारोपितद्वैतवदर्थः[4]। स चारोपोऽज्ञानकृत एव। 'इन्द्रो मायाभिः पुरुरूप ईयते। न तु तद् द्वितीयमस्ति'[5] इति श्रुतेः।

'मायया भिद्यते ह्येतन्नान्यथा तु कथञ्चन।
तत्त्वतो भिद्यमाने हि मर्त्यताममृतं व्रजेत्'[6] ।।

यथा चाकचिक्यवशाद् रज्जुः सर्पाकारेण विवर्तते, यथा च मरुस्थलीयसिकतास्वपि मृगस्य जलभ्रमः, तथैव परमार्थतोऽद्वयं निरवयवञ्च ब्रह्म मायया प्रपञ्चाकारेण विवर्तते। यद्यपि नानाश्रुतिप्रमाणैरेकमेवाद्वितीयं ब्रह्मस्वरूपं निश्चितम्, तथापि भ्रान्तिवशात्तत्र नानात्वमपि प्रतीयते। 'नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिम्'[7]। तत्र च निमित्तमज्ञानम्। तच्चाज्ञानमविद्यामायादिपदेनापि व्यवह्रियते। वस्तुतोऽसदपि जगदज्ञानेनावृताधिष्ठानमहिम्ना सद्वदवभासते।

---

१. श्वेता. ६।१।९।
२. मुण्डको. २।१।२;
३. मा.कारि. ३।१८।
४. वैयाकरणभूषणसारे, कारिका ४०;
५. बृहदा. २।५।१९।
६. मा.उप. ३।१९;
७. मुण्डको. १।१।६।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

मायानिमित्तं सकलप्रसूतेः सैव प्रपञ्चस्य वितानहेतुः ।
विवर्तते ब्रह्म तदाश्रितं सदा भ्रान्त्याऽऽश्रयस्यापि जगत्प्रतीतिः ।।

अज्ञानपदेनात्र न ज्ञानप्रतियोगिताकाभावो गृह्यते, तस्याभावरूपत्वे प्रपञ्चोत्पत्तावनिमित्तत्वं प्रपद्येत। किञ्चाज्ञानमत्र ज्ञानविरोधि ज्ञानसमसत्ताकं ज्ञानवच्चानादिरूपमभिमन्यते। तथा चोक्तम्—

'अनादिभावरूपं यद्विज्ञाने न विलीयते।
तदज्ञानमिति प्राज्ञा लक्षणं सम्प्रचक्षते'[1] ।।

अज्ञानं यदि ज्ञानसमसत्ताकं न स्यात्तदा ज्ञानं नावृणुयात्, आवृणोति च ज्ञानमतोऽज्ञानं ज्ञानसमसत्ताकमिति।

'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' ।[2]

अज्ञानं हि शक्तिद्वयसमन्वितमेव भेदबुद्धिप्रवर्तकम्। तत्रावरणशक्त्या प्राणिमात्रस्य चक्षुरादिज्ञानेन्द्रियाण्यावृत्त्य विक्षेपशक्त्या च प्रपञ्चे प्रवृत्तिमुत्पादयति। तथा चोक्तं सङ्क्षेपशारीरके—

'आच्छाद्य विक्षिपति संस्फुरदात्मरूपं जीवेश्वरत्वजगदाकृतिभिर्मृषैव।
अज्ञानमावरणविभ्रमशक्तियोगादात्मत्वमात्रविषयाश्रयताबलेन'[3] ।।

तदेवाज्ञानं क्रियारूपोपाधिनाऽविद्या-मायेति संज्ञां भजते। तत्र विशुद्धसत्त्व-गुणरूपोपाधिनोपहितमीश्वरोपाधिस्वरूपं माया। मिमीते शुद्धं ब्रह्म परिच्छिनत्तीति व्युत्पत्त्या माङ्-माने धातोः 'माच्छाससिसूभ्यो यः'[4] इत्युणादिसूत्रेण यप्रत्यये स्त्रीत्वाट्टापि मायेति शब्दनिष्पत्तिः। यद्वा मया = ज्ञानेन, याति = निवर्तते या सा माया ज्ञाननिवर्त्यशीलेत्यर्थः। अज्ञानस्य ज्ञाननिवर्तनत्वमन्यत्रापि स्मृतम्। यथा—

'ज्ञानेन तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्'[5] ।।

माया हि सत्त्वगुणप्रधानत्वादावरणविक्षेपशक्तिहीनत्वेन प्रपञ्चोत्पत्ताव-निमित्तम्। तथा चोक्तम्—'अनादिरनिर्वाच्या भूतप्रकृतिश्चिन्मात्रसम्बन्धिनी माया'

---

१. तत्त्वदीपिकायामनिर्वचनीयनिरूपणे।
२. गीता-५।१५;
३. सङ्क्षेपशारीरके-१।२०।
४. उणादिसूत्रम्-४।११८;
५. गीता-५।१६।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अनादिर्विश्वसम्भूतिर्माया चिन्मात्रसंश्रया ।
तदेकदेशोऽविद्या तु विक्षेपावरणान्विता'[१] ।।

इदमेवाज्ञानं सत्त्वरजस्तमोगुणसाम्यावस्थापन्नं सांख्यनये मूलप्रकृतिः। उक्तञ्च—'मूलप्रकृतिरविकृतिः'[२]। तस्या एव मूलप्रकृतेः प्रकाशात्मकसत्त्वोद्रेकान्मायाऽविद्येति व्यपदेशः। तत्र विशुद्धसत्त्वप्रधाना माया, मलिनसत्त्वप्रधाना ह्यविद्या। मायां वशीकृत्य तस्यामेव प्रतिफलितश्चिदात्मा सर्वज्ञत्वादिगुणसम्पन्न ईश्वरः। 'इन्द्रो मायाभिः पुरुरूप ईयते',[३] 'मायां तु प्रकृतिं विद्यान्मायिनं परमेश्वरम्'[४]। उक्तञ्च—

'सत्त्वशुद्ध्यविशुद्धिभ्यां मायाऽविद्ये च ते मते।
मायाबिम्बो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः'[५] ।।

अविद्यैव ब्रह्मणो जीवेश्वररूपेण निरवच्छिन्नब्रह्मस्वरूपेण च विभेदहेतुः। तत्र सत्त्वगुणप्रधानमायावच्छिन्न ईश्वरस्तयोपहितश्चैतन्य ईश्वरसाक्षी। मलिनसत्त्वप्रधानाविद्यावच्छिन्नो जीवस्तया चोपहितश्चैतन्यो जीवसाक्षी। उक्तञ्च विवरणप्रमेयसङ्ग्रहे—ज्ञानाभावभ्रान्तिज्ञानतत्संस्कारा एवाऽज्ञानाभिधानास्त एव ब्रह्मतत्त्वावभासप्रतिवध्योक्तव्यवहारं जनयिष्यन्ति। शुद्धसत्त्वगुणान्विताविद्यावच्छिन्नः परमात्मा सर्वनियन्तृत्वाद् भोग्यभोक्तृप्रवृत्तिप्रयोजकत्वाच्चेश्वर इति व्यपदिश्यते। रजोगुणात्मिकयाऽविद्ययाऽन्वितो हिरण्यगर्भो ब्रह्मेत्युच्यते। सृष्ट्यादौ हिरण्यगर्भ एवोत्पद्यते, तस्यैव च वैदिकसृष्टिप्रवर्तकत्वमभिमतम्[६]। 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्याम्...'। सर्वोपाधिनिरवच्छिन्नः स्वसजातीयविजातीयस्वगतभेदशून्यश्च परमात्मा सर्वव्यापकत्वाद् ब्रह्म विभुः सर्वशक्त्याश्रयतया च पुरुष इत्युच्यते'[७]। 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः[८]'। 'सर्वं ह्येतद् ब्रह्मायमात्मा[९]' सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितमिति श्रुतयस्तदेव प्रमाणयन्ति[१०]।

---

१. सिद्धान्तलेशसङ्ग्रहे, प्रथमपरिच्छेदे;
२. सांख्यकारिका।
३. ऋ.सं.-६।४७।१८;
४. श्वेता.-४।१०।
५. पञ्चदशीतत्त्वविवेके-१६;
६. विवरणप्रमेयसङ्ग्रहे।
७. ऋ.स.-६।२।९;
८. मुण्ड.-२।२।५।
९. मा.उप.-१।२;
१०. श्वेता.उप.-३।१।१६।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

मायोपाधिमुपेत्य सत्यनियतं सर्वप्रपञ्चाश्रयं
तस्या एव विशुद्धसत्त्वसुभगो लोकेश्वरः ख्यायते।
मालिन्यञ्च समाश्रितो विभुरयं जीवः स्वकर्मानुगः
सर्वोपाधिविनिर्गतं निरवयवं शान्तञ्च दान्तं सदा ।।

मायाऽविद्ययोरुपाधेयभिन्नत्वेऽपि लोके पर्यायत्वेन व्यवहारो दृश्यते। तत्र शुक्त्यधिष्ठाने भ्रान्तं रजतमविद्यामयं मायामयं वेति विचारणायामविद्यामयमेवोच्यते, तत्त्वज्ञाननिवर्त्यशीलत्वात्। न च मायैवाविद्यालक्षणप्रसिद्धिभ्यां तयोर्भेदावगमात्। तत्रेयान् भेदः, माया हि कर्तुरिच्छामेवानुसरति, न विपरीतमतः स्वाश्रयं न व्यामोहयति, अविद्या तु स्वाधिष्ठानमावृत्य विक्षेपशक्त्याऽधिष्ठानस्वरूपान्तरमप्युत्पादयति, तथाप्यस्ति तादृशमुभयनिष्ठं किमपि लक्षणं येनोभयोर्लोके पर्यायतोपयुज्यते। 'अनिर्वचनीयत्वे सति तत्त्वावभासप्रतिबन्धविपर्यावभासयोर्हेतुत्वं लक्षणं तच्चोभयोरविशिष्टम्'[१]। सा चाविद्या ब्रह्माश्रितैव प्रपञ्चोत्पत्तिनिमित्तम्। 'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्'[२] इति स्मृतिवचनात्।

अविद्यायां प्रतिबिम्बत्वेन स्थितस्तत्परतन्त्रश्च चिदात्मा स्वाविनाशिस्वरूपपरिज्ञानादभिमानी जीवः। अविद्या हि प्राणिमात्रस्य स्थूलसूक्ष्मादिकारणशरीरनिमित्तम्। जीवस्त्वविद्योपाधिवैचक्षण्यान्नानादेवतिर्यगादिदेहभेदाद्भिन्नः। 'अविद्यावशगस्त्वन्यस्तद्वैचिन्त्यादनेकधा'[३], अनादिरनिर्वाच्या भूतप्रकृतिश्चिन्मात्रसम्बन्धिनी माया। तस्यां चित्प्रतिबिम्ब ईश्वरः सर्वशक्तिसम्पन्नत्वात् कर्तेत्युच्यते। मायोपहितस्यैव ब्रह्मणः कर्तृत्वादिकं सम्भवति। अनुपहितस्य निरवयवत्वात् कर्तृत्वासम्भवः। 'एष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते'[४] इति श्रुतेः। 'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः'[५] इति स्मृतेश्च। तन्मायाया एवावरण-विक्षेपशक्त्यात्मकाविद्याभिधानेषु परिच्छिन्नानन्तप्रदेशेषु चित्प्रतिबिम्बो जीवः। अविद्याकृत एव दृग्दृश्यविभेदः। तत्र दृश्यं ब्रह्माधिष्ठानेन विवर्तमानोऽविद्यापरिणामः प्रपञ्चः। दृक् = द्रष्टा आत्मा एकोऽप्यौपाधिकभेदेन त्रिविधः, ईश्वरो जीवस्साक्षी चेति। तत्र कारणीभूताज्ञानोपाधिरीश्वरः। अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानोपहितो जीवः। अविद्याप्रतिबिम्बेश्वरपक्षे बिम्बचैतन्यं साक्षी बिम्बेश्वरपक्षे तु बिम्बप्रतिमुखानुगतमुखस्वरूपवज्जीवेश्वरा-

---

१. विवरणप्रमेयसङ्ग्रहे; २. गीता-९।१०।
३. तत्त्वविवेके-१७; ४. प्रश्नोपनिषद्-४।२।
५. गीता.-५।१४।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

नुगतसर्वानुसन्धातृचैतन्यं साक्षीत्युच्यते। अज्ञानोपलक्षितस्य परमात्मनः समष्टिव्यष्ट्युपाधिद्वारेणेश्वरजीवभेदः। तत्र समष्ट्यज्ञानोपलक्षितं चैतन्यं सर्वस्य चराचरात्मकप्रपञ्चस्य साक्षित्वेन सर्वज्ञ इत्युच्यते। सर्वेषां जीवानां कर्मानुरूपेप्सितफलदातृत्वेनेश्वरः, सर्वेषां जीवानामन्तर्हृदये स्थित्वा बुद्धिनियामकत्वेनान्तर्यामीत्युच्यते। अस्यैव परमात्मनः सर्वस्य चराचरात्मकप्रपञ्चस्य विवर्ताधिष्ठानत्वेन जगत्कारणत्वमिति व्यपदेशः। मायावच्छिन्नेश्वरचैतन्यमेवोद्भूतसत्त्वगुणमायान्वितं पालयितृविष्णु-नारायणादिवाच्यतां भजते। तदेवोद्भूतरजोगुणमायावच्छिन्नं स्रष्टृब्रह्मविधात्रादिशब्दप्रतिपाद्यतां तदेवोद्भूततमोगुणमायान्वितं संहर्तृमहेश्वररुद्रादिशब्दाभिधेयतां चाधिगच्छति। तथा चोक्तम्—'स च परमेश्वर एकोऽपि स्वोपाधिभूतमायानिष्ठसत्त्वरजस्तमोगुणभेदेन विष्णु-ब्रह्म-महेश्वर इत्यादिशब्दवाच्यतां लभते। निरवच्छिन्नः परमात्मा ब्रह्मेत्युच्यते'[1]।

प्रपञ्चोत्पत्तावद्वैतसिद्धान्तानुयायिनामाचार्याणावैमत्यमपि दृश्यते। अत्र तत्त्वनिर्णयकारो मायाब्रह्मद्वयमपि प्रपञ्चोपादानमिति मन्यते। सत्ताजाड्यरूपोभयधर्मानुगत्या जगदुत्पत्तिस्तत्र ब्रह्म विवर्तमानतयोपादानमविद्यापरिणामतया।

न केवलं ब्रह्म जगन्निमित्तं प्रपञ्चसृष्टिः प्रमदाबलेन ।
विवर्तते ब्रह्म निमित्तमेत्य सशक्तमायापरिणामहेतुः ।।

सङ्क्षेपशारीरककारस्तु ब्रह्मैवोपादानकारणमविद्या तु द्वारमात्रमित्याह। स्वप्नादौ चेतनस्याप्युपादानतादर्शनात्। न हि तत्र चेतनातिरिक्तं किञ्चिदवशिष्यते। न च कूटस्थस्य स्वत उपादानत्वे तद्विकारापत्तिः, मायाया अपि द्वारत्वेन कारणत्वस्वीकारात्। एतेन मायोपहितब्रह्म प्रपञ्चोपादानहेतुरिति फलम्। तथा चोक्तम्—

'उपादानता चेतनस्यापि दृष्टा यथा स्वप्नसर्गे विचित्रे प्रतीचः।
यथा चोर्णनाभस्य सूत्रेषु पुंसां यथा केशलोमादिसृष्टौ च दृष्टा'[2]।।

मायाद्वारमत्र प्रपञ्चसृष्टिकर्मोपाधिः। अविद्यारूपक्रियोपाधिमाश्रित्य चिदात्मा प्रपञ्चसर्जने क्षमते। तत्र ब्रह्मणोऽधिष्ठानतया विवर्तोपादानत्वं मायोपहितस्य चेतनत्वाच्च कर्तृत्वमित्यभिमन्यते। अविद्या हि सृष्टिकर्माश्रिता परिणामहेतुमात्रम्।

'अज्ञानतज्जघना चिदधिक्रियायां द्वारं परं भवति नाधिकृतत्वमस्याः ।
नाचेतनस्य घटतेऽधिकृतिः कदाचित्कर्तृत्वशक्तिविरहादिति वक्ष्यते हि'[3]।।

---

१. वेदान्तपरिभाषा, प्रत्यक्षपरिच्छेदे; २. सङ्क्षेपशारीरके-१।५४५।
३. सङ्क्षेपशारीरके-१।५५५;

CC-0. Sampurnanand University Collection. Digitized by eGangotri

भामतीकारमते जीवाश्रितमायाविषयीकृतस्य ब्रह्मण एव जाड्याश्रयत्वेन प्रपञ्चाकारेण विवर्तोपादानता। माया सहकारिमात्रम्। उक्तञ्चानुमानिकाधिकरणे 'तदधीनत्वादर्थवत्'[१] इति सूत्रशाङ्करभाष्यं व्याकुर्वता वाचस्पतिमिश्रेण—'प्रपञ्च-विभ्रमस्य हीश्वराधिष्ठानत्वमहिविभ्रमस्येव रज्ज्वधिष्ठानम्, तेन यथाऽहिविभ्रमो रज्जूपादानः, एवं प्रपञ्चविभ्रम ईश्वरोपादानः, तस्माज्जीवाधिकरणाऽप्यविद्या निमित्ततया विषयतया वेश्वरमाश्रयत इतीश्वराश्रयेत्युच्यते, न त्वाधारतया, विद्यास्वभावे ब्रह्मणि तदनुपपत्तेः'[२]।

सिद्धान्तमुक्तावलीकाराः प्रकाशानन्दस्वामिनस्तु, 'तदेतद् ब्रह्मापूर्व-मनपरमनन्तरमबाह्यम्'[३], 'आशीर्यो न हि शीयते, असङ्गो न हि सज्यते'[४], 'न तस्य कार्यं करणं च विद्यते'[५] इत्यादिश्रुतिप्रमाणेन दृश्यत्वाद्यनुमानसिद्धानिर्वचनी-यस्य जगतोऽनाद्यनिर्वचनीयाऽविद्यैव कारणं न ब्रह्म, तस्य कूटस्थत्वेन कार्यकारण-हीनत्वात्। कथं तर्हि ब्रह्मणो जगत्कारणत्वं श्रुतौ प्रसिद्धम्? अधिष्ठानत्वेन कारणत्वोपचारात्। तथा च श्रुतिः—'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्'[६]। उक्तञ्च भगवत्पादेन—'अस्ति तावद् ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितम्'[७], अतोऽविद्यैवावरणविक्षेपशक्तिसमन्विता प्रपञ्चोपादानहेतुः।

व्याख्यानभेदान्मतेऽपि भेदः संदृश्यते कर्तृवचोविरूपात्।
सिद्धान्ततः सर्वमतैक्यमेव मायाप्रपञ्चस्य निमित्तमेकम्॥
तदाश्रयं ब्रह्म विवर्तहेतुरविद्ययाऽनित्यजगत्प्रसूतिः॥

सा चाविद्या तमोगुणप्रधानावरणशक्त्या वास्तविकं वस्तुतत्त्वमावृत्त्य रजोगुणप्रधानविक्षेपशक्त्या वृक्षादिस्थावररूपं मनुष्यपशुसरीसृपादिजङ्गमस्वरूपञ्च प्रपञ्चं सृजति। परमार्थतोऽसद्रूपस्य प्रपञ्चजातस्याधिष्ठानं विना प्रत्ययाक्षमत्वाद् ब्रह्मैवाधिष्ठानत्वेनाश्रयते। तथा चोक्तम्—

'ब्रह्माज्ञानाज्जगज्जम ब्रह्मणोऽकारणत्वतः।
अधिष्ठानत्वमात्रेण कारणं ब्रह्म गीयते'[८]॥

---

१. ब्र.सू.-१।४।३; २. भामती, ब्र.सू.,शा.भा.,१।४।३।
३. बृ. उ.-२।५।१९; ४. बृ. उ. ३।३।२६।
५. श्वेता.-६।८; ६. तत्रैव।
७. तत्रैव-६।१९; ८. शा.भा.ब्र.सू.-१।१।१।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

यद्यपि 'यतो वा इमानि भूतानि जायन्ते'[१], 'तस्माद्वा एतस्मादाकाश: सम्भूत:'[२], 'एतस्माज्जायते प्राणो मन: सर्वेन्द्रियाणि च'[३] इत्यादिश्रुतय: परब्रह्मण एव प्रपञ्चोपादानत्वमवबोधयन्ति। उक्तञ्च सङ्क्षेपशारीरके-'निमित्तं च योनिश्च यत्कारणं तत्परं ब्रह्म सर्वस्य जन्मादिभाज:'[४]। अज्ञानस्य कारणत्वपक्षे किं सदज्ञानं कारणमसद्वा? सदिति चेन्नाभावरूपस्याज्ञानस्य सत्ताऽस्वीकारात्। स्वसजातीयविजातीयस्वगतभेदशून्यस्य ब्रह्मणोऽतिरिक्ताज्ञानस्य सत्तास्वीकारापत्ते:। स्वयं सत्ताहीनस्य कारणत्वव्यभिचाराच्च। 'आत्मा वा इदमेक एवाग्र आसीत्, नान्यत्किञ्चन मिषत्'[५], 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'[६] इत्यादिश्रुति-विरोधापत्तेश्च। 'आत्मैवेदं सर्वम्'[७], 'अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्'[८], 'इदं सर्वं यदयमात्मा'[९] इत्यादिश्रुतिभिरात्मव्यतिरेकेणाभावदर्शनाद् ब्रह्मैव प्रपञ्चस्योपादानं निमित्तञ्च। लोके यथा लूताकीट: स्वोत्पाद्यमानं तन्तुलक्षणं कार्यं प्रति स्वचैतन्यप्रधानतया निमित्तं चैतन्यसन्निधानव्यतिरेकेण जडस्य देहस्य मृतशरीरवत्तन्तुजनकत्वासम्भवात् स्वशरीरप्राधान्येनोपादानं च भवति। यथा ब्रीह्यादिस्थावरान्ता ओषधय: पृथिव्यामेवोत्पद्यन्ते, तत्रैव च लीयन्ते। यथा च जीवत: पुरुषात् केशलोमानि सम्भवन्ति, तथैव निमित्तान्तराननपेक्ष्य विलक्षणमिदं जगद् अक्षररूपाद् ब्रह्मण उत्पद्यते। तथा चोक्तम्—

'यथोर्णनाभि: सृजते गृह्यते च यथा पृथिव्यामोषधय: सम्भवन्ति ।
यथा सत: पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवन्तीह विश्वम्'[१०] ।।

'जन्माद्यस्य यत:'[११] इत्यनेनापि ब्रह्मणो जगज्जन्मादिकारणत्वमुक्तम्। तथा चोक्तं शाङ्करभाष्येऽपि—'अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृ-संयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाऽप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यत: सर्वज्ञात् सर्वशक्ते: कारणाद् भवति तद् ब्रह्मेति'[१२], 'यतो वा इमानि भूतानि जायन्ते, यस्मिन् जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति, तद् विजिज्ञासस्व तद् ब्रह्म'[१३] इति श्रुतिरपि ब्रह्मण उपादानत्वं बोधयति।

१. श्रीप्रकाशानन्दकृत-सि.मु., श्लो.-३८। २. तैत्तिरीयोपनिषद्-३।१।१;
३. तैत्तिरीयोपनिषद्-२।१।१। ४. सङ्क्षेपशारीरके, श्लो.-५३२;
५. एतरेयो.-१।१। ६. छा.उप.-६।२।१;
७. छा.उ.-२५।२१। ८. मु.उ.-२।२।११;
९. बृ.उ.-२।४।६। १०. मु.उ.-१।१।७;
११. ब्र.सू.-१।१।२। १२. ब्र.सू., शा.भा.-१।१।२; १३. तै.उ.-३।१।१।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तत्रेदं जिज्ञास्यते—ब्रह्मणो निमित्तत्वेन कारणत्वमाहोस्विदुपादानत्वेन, कारणत्वस्य चोभयथा दर्शनात्। कार्यप्रकृतिरुपादानं यथा घटस्य मृत्तिका। तदितरद् दण्डादिनिमित्तकारणमुपादानादन्यन्निमित्तमिति लोकसिद्धम्। अत एव 'कार्यी निमित्ततया नाश्रीयते'[१] इति शाब्दिकनये प्रसिद्धम्। यद्यपि लोके एकस्य निमित्तत्वमुपादानत्वञ्च न प्रायेण दृश्यते, तथापि सर्वज्ञस्य सर्वशक्तिमतः परमेश्वरस्योभयं घटते। ईक्षापूर्वककर्तृत्वश्रवणान्निमित्तत्वम्। 'स ईक्षाञ्चक्रे'[२], 'सोऽकामयत बहु स्यां प्रजायेय'[३], 'एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्'[४] इत्यादिश्रुतिभिरुभयत्वदर्शनात्। 'प्रकृतिश्च प्रतिज्ञा-दृष्टान्तानुपरोधात्'[५], 'अविद्योपदेशाच्च'[६], 'साक्षाच्चोभयाम्नानात्'[७], 'आत्मकृतेः परिणामात्'[८], 'योनिश्च हि गीयते'[९] इति बादरायणीयानि सूत्राणि ब्रह्मणः प्रकृतित्वमेव बोधयन्ति।

कार्यं दृष्ट्वा कारणानुमानात्, कार्यं हि जगत् सावयवमचेतनमशुद्धञ्च दृश्यते। अतस्तादृशेनैव कारणेन भवितव्यम्। न हि श्वेतसूत्रैर्लोहितः पट उत्पद्यते, कार्यकारणयोः सारूप्यदर्शनात्। ब्रह्म हि कूटस्थमविकारि निरवयवञ्च श्रूयते। तथा च श्रुतिः—'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्'[१०]। ब्रह्मण इच्छाशक्तेरेव परिणतिरिदं जगत्। सा चेच्छाशक्तिरविद्यैव नापरा काचित्। मायावच्छिन्नस्यैव ब्रह्मणो विवर्तोऽयं प्रपञ्चः। प्रकृतिर्हि द्विधा—परिणामोपादानभूता च। तत्र परिणामोपादानभूतायाः प्रकृतेरेव गुणाः कार्येष्वादधते, न तु विवर्तोपादानभूतायाः। अधिष्ठानसमसत्ताककार्यापत्तिः परिणामः, अधिष्ठानविषयसत्ताककार्यापत्तिश्च विवर्त इति वचनात्। दुग्धं दधि भवतीति परिणामः। शुक्तौ रजतमिति विवर्तः।

तथा चोक्तम्—

अतत्त्वतोऽन्यथाप्रथाविवर्त इत्युदीरितः।
सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीर्यते[११]॥

---

१. परिभाषेन्दुशेखरे, परि.-१०; २. प्रश्नो.-६।३।
३. तै.उ.-२।६; ४. मा-उ.-६।६।
५. ब्र.सू.-१।४।२४; ६. तदेव-१।४।२५।
७. तदेव-१।४।२५; ८. तदेव-१।४।२७।
९. तदेव-१।४।२८; १०. श्वेता.उ.-६।१९।
११. वाक्यपदीये, ब्रह्मकाण्डे, प्रदीपटीकायाम्, का.-१;

CC-0. Sampurnanand University Collection. Digitized by eGangotri

यथैन्द्रजालिको नटः स्वकीयैन्द्रजालविद्यया दर्शकसमुदायं मोहयित्वा स्वमायया नानाप्रपञ्चं सृजति, न च तत्र स्वयं मोहमुपैति, ऐन्द्रजालविद्याया नटाधीनत्वात्। तथैव निजेच्छाशक्तिरूपयाऽविद्यया प्राणिमात्रं विमोह्य जगत्सर्जनं विधत्ते परमात्मा। तथा चोक्तम्—

'अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम्।
अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते'[१]।।

मायावच्छिन्न ईश्वररूपः परमात्माऽपि अविद्यावशाद् विहितकर्मणां भोगेच्छया रामकृष्णादिरूपेणावतरति। तत्रापि जनिहेतुरविद्यैव। उक्तञ्च भगवता श्रीकृष्णेन—

'मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
सम्भवः सर्वभूतानां ततो भवति भारत'[२] ।।

यद्यपि सुखदुःखादिसमवायिकारणतावच्छेदकतयाऽऽत्मत्वजातिसिद्धौ परमेश्वरे सुखानुत्पादेन सुखसमवायिकारणत्वस्य तत्राभावात् परमेश्वरसाधारणी आत्मत्वजातिर्न सिद्ध्यति, तथापि फलोपधायकतारूपकारणतायाः परमेश्वरेऽसत्त्वेऽपि स्वरूपयोग्यताख्यरूपकारणतायाः सत्त्वेनात्मत्वजातिः सिद्ध्यति। 'ईश्वरेऽपि सा जातिरस्त्येव। अदृष्टादिरूपकारणाभावान्न सुखदुःखाद्युत्पत्तिः'[३]। नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियम इत्यस्याप्रयोजकत्वाद् भगवता शङ्करेणापि अविद्यायाः प्रपञ्चोपादानत्वमुरीकृतम्। तथा चोक्तम्—'अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुषुप्तिः, यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः'[४]।

ननु प्रपञ्चोपादानं किं माया, ब्रह्म, उभयं वा। नाद्यः, अधिष्ठानमन्तरा मायाया एवासम्भवात् तस्याः कार्यकारणेन परिणामायोगाज्जडायास्तस्याश्चैतन्यायोगे प्रवृत्त्ययोगात्। कार्ये प्रपञ्चे सत्ताया अनुगमाद् मायामात्रस्योपादानत्वाभावात्। न हि मायायाः सत्त्वमङ्गीक्रियते। प्रपञ्चोपादानस्यैकत्वं सद्रूपत्वञ्च श्रुत्या बोधितम्। 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'[५]। नापि द्वितीयः, ब्रह्मणः कारणत्वे तस्य सत्यत्वेन तदुपादानकस्य प्रपञ्चस्यापि सत्यत्वापातात्। 'सत्यं ज्ञानमनन्तं ब्रह्म'[६]। ब्रह्मणो निर्विकारत्वं श्रुतिभिः

---

१. ब्र.सू. वार्तिकम्;
२. गीता-१४।३।
३. न्या.सि.मु., आत्मत्वनिरूपणे;
४. शा.भा., ब्र.सू.-१।४।३।
५. छा.उ.-६।२।१;
६. तै.उ.-२।१।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

स्वीकारात्। 'निष्फलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्'[1]। न च जडत्वसत्यत्वयोरनुगमात् प्रपञ्चस्योभयोपादानकत्वं तृतीयः पक्षः स्वीकार्य इति वाच्यम्, विकल्पासहत्वात्। तथा हि किं पटं प्रति सूत्राणामिव परस्परविशिष्टयोः समप्रधानयोर्मायाब्रह्मणोरुपादानत्वम्, उत मायाशक्तिमतो ब्रह्मणो मायाद्वारस्य वा तस्य। न तावत् प्रथमः पक्षः, उभयोः समप्रधानत्वाद् ब्रह्मणोऽपि विकारित्वापातात्। सूत्रारब्धपटवत् प्रपञ्चोऽप्युभयारब्धः स्यात्। किञ्चोभयोः समप्रधानयोरुपादानत्वे प्रपञ्चे सत्यत्वानिर्वचनीययोरापातः, सितासितसूत्रारब्धपटे सितासितत्ववत्। न च तयोर्धर्मयोरेकत्र सहावस्थितिः सम्भवति विरोधात्।

द्वितीयपक्षोऽपि न युक्तः, मायाशक्तिमद् ब्रह्मण उपादानत्वे तस्य विकारित्वादनित्यत्वापत्तिर्दुर्वारा स्यात्। मायाशक्तेर्विशेषणत्वे तस्याश्च ब्रह्मणि विद्यमानत्वेन निर्विशेषश्रुतिविरोधः। मायाया विशेषणत्वेऽपि मायाविशिष्टस्याब्रह्मत्वे तस्य जगत्कारणत्वानुपपत्तिः स्यात्। किञ्च विशिष्टस्य ब्रह्मणः परिणामरूपं जगदिति समसत्ताककार्यापत्तेर्विवर्तवादहानापत्तिः, असमसत्ताककार्यापत्तिर्विवर्त इति स्मरणात्।

एवमेव मायाद्वारा ब्रह्म कारणमिति तृतीयपक्षोऽपि न युज्यते। तथा हि द्वारत्वं सहकारित्वम्। मायायाः सहकारित्व उपादानत्वाभावात्, प्रपञ्चे जडत्वादिधर्मानुपपत्तेः। न हि घटे सहकारिदण्डादिधर्मा अनुवर्तन्ते। अतो मायोपहितं ब्रह्म जगत्कारणम्। 'यः सर्वज्ञः स सर्ववित्'[2]। 'तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः'[3] इत्यादिश्रुतेश्च। तथाऽवगमात्। सर्वज्ञत्वञ्च ब्रह्मणः स्वोपाधिभूतमायायां तत्परिणामे च प्रतिबिम्बितत्वेन भासकत्वम्। अतीतानागतादिविषयाकारपरिणतोपाधौ प्रतिबिम्बितं चैतन्यं सर्वं पश्यति। एवमज्ञानोपहितत्वं तस्य युक्तम्। तदेव ब्रह्म जगदुपादानम्। तस्माद्वा एतस्माद् इत्यनेनाऽप्यज्ञानोपहितादात्मनो जगज्जायत इति स्पष्टमेवावगम्यते। तथा चोक्तम्—'स्वमायया सृष्टमिदं सदसल्लक्षणं विभुः। प्रविष्ट ईयते तत्तत्स्वरूपोऽग्निरिवैधसि'[4]। सा च माया मया= प्रमया (ज्ञानेन) याति = निवर्तत इति व्युत्पत्त्या ज्ञाननिवर्त्त्या ब्रह्मणो विशेषशक्ति सहकारिणी वा।

मायोपहितस्य ब्रह्मणः कारणत्वेऽपि मायायाः परिणामितया ब्रह्मणश्च विवर्ताधिष्ठानतया कारणत्वाङ्गीकारान्न पूर्वोक्तदोषाः सम्भवन्ति। एवञ्च जगदुपादानत्वं ब्रह्मण आरोपितम्। 'शक्तिद्वयवदज्ञानोपहितं चैतन्यं स्वप्रधानतया

---

१. श्वेता.उ.-६।१९; २. मु.उ.-१।१।९।
३. तै.उ.-२।१।१; ४. श्रीमद्भागवते-११।७।४७।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

निमित्तं स्वोपाधिप्राधान्यतयोपादानं च भवति'[१]। 'तत्सृष्ट्वा तदेवानुप्राविशत्'[२] इति श्रुतेश्च। मायोपहितस्यैव ब्रह्मणो जीवेश्वरादिरूप औपाधिकभेदः। 'सर्वदैकरूपोऽप्यौपाधिकभेदेन त्रिविधः—ईश्वरो जीवस्साक्षी चेति'[३]। तथा च निर्विकारत्वनिर्विशेषत्वश्रुतिः सामञ्जस्यं भजते। न च मायापरिणामे मनागपि ब्रह्मणो विकारित्वं सम्भवति, आरोपितेनाधिष्ठानस्य संश्लेषासम्भवात्। न ह्यारोपितेन रजतेन मनागपि शुक्तिसंश्लेषो भवति। तथा च—'चेतनं ब्रह्मैकमद्वितीयं जगतः कारणम्' इति यदुक्तं तन्नोपपद्यते, कस्मात् उपसंहारदर्शनात्। इह हि लोके कुलालादयो घटपटादीनां कर्तारो मृद्दण्डचक्रसूत्रसलिलाद्यनेककारकसाधनोपसंहारेण सङ्गृहीतसाधनाः सन्तस्तत्तत्कार्यं कुर्वाणा दृश्यन्ते।

यथा चक्रचीवरदण्डाद्यनेककारणसमवहितेषु कुलालेहाधीना मृत्तिकैव घटाकारेण परिणमते, तथैव प्रपञ्चाकारेण मायापरिणामः...., ब्रह्मणस्तु नित्यशुद्धबुद्धमुक्तस्वभावत्वान्न विकारसम्भवः। 'प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः। भूतग्राममिमं कृस्नमवशं प्रकृतेर्वशात्'[४]। परमात्मवशीभूता माया तदिच्छानुरूपमेव प्रपञ्चं सृजति। तथा चोक्तम्—'यथा च मायावी स्वयं प्रसारितां मायामिच्छयाऽनायासेनैवोपसंहरति, एवं शारीरोऽपीमां सृष्टिमुपसंहरेत्'[५]। मायाया ब्रह्मणः परतन्त्रत्वात् तत्कार्यमपि परतन्त्रमिति। 'त्वं मायया विगुणयाऽऽत्मनि दुर्विभाव्यं व्यक्तं सृजस्यवसि लुम्पसि तद्गुणस्थः'[६]। 'प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः'[७]।

वाचस्पतिमिश्रास्तु जीवाश्रिताविद्याविषयीकृतं ब्रह्मैव जाड्याश्रयप्रपञ्चाकारेण विवर्तमानतयोपादानं माया हि सहकारिमात्रम्। 'अविद्याकल्पितेन तु नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मना तत्त्वातत्त्वाभ्यामनिर्वचनीयेन परिणामादिव्यवहारास्पदत्वं ब्रह्म प्रतिपद्यते'[८]। उक्तञ्च वेदान्तकल्पतरुकारेण—

'स्वशक्त्या नटवद् ब्रह्म कारणं शङ्करोऽब्रवीत्।
जीवभ्रान्तिनिमित्तं तद् बभाषे भामतीपतिः।।
अज्ञातं नटवद् ब्रह्म कारणं शङ्करोऽब्रवीत्।
जीवाज्ञातं जगद्बीजं जगौ वाचस्पतिस्तथा'[९]।

---

१. वेदान्तसारे-१०।११;
२. तै.उ.-२।६।१।
३. सिद्धान्तबिन्दौ पृ.-३४९;
४. शा.भा., ब्र.सू.-२।१।२१।
५. गीता-९।८;
६. शा.भा., ब्र.सू.-२।२।२१।
७. श्रीमद्भागवते-११।६।८;
८. गीता-९।८।
९. भामती, शा.भा.ब्र.सू.-२।१।२६;

CC-0. Sampurnanand University Collection. Digitized by eGangotri

इयमविद्यैव सकलद्वैतोत्पत्तौ निमित्तम्। ब्रह्मजीवभेदो ब्रह्मस्वरूपमावृत्य जीवेश्वरप्रभेदश्च मायाधीनावेव। अविद्याप्रतिबिम्बितं चैतन्यं जीवः। बिम्बभूतमीश्वरः। अविद्यायाश्चानादित्वादेव अनादिजीवब्रह्मविभागहेतुत्वमविरुद्धम्। अविद्यानादित्वं च 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि'[१] इति स्मृतावुक्तम्। प्रकृतिपदेनात्र मायाऽभिप्रेता। 'मायां तु प्रकृतिं विद्यादिति'[२] श्रुतेः। मायाऽविद्ययोरभेदात्। अनिर्वचनीयत्वादेव ज्ञाननिवर्त्यत्वमपि श्रुतेः, मायाऽविद्ययोरभेदात्। अनिर्वचनीयत्वादेव ज्ञाननिवर्त्यत्वमपि सिद्ध्यति। तत्राविद्याप्रतिबिम्बितं चैतन्यं जीवः। बिम्बभूतमीश्वरः। उभयानुस्यूतं शुद्धमिति विभागः। जीवस्य प्रतिबिम्बत्वे 'रूपं रूपं प्रतिरूपो बभूव'[३], 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इति श्रुतिप्रमाणम्। सा चाविद्या जीवब्रह्मोभयत्र सम्बन्धमाश्रित्य जीवभागमाश्रित्यैव प्रपञ्चं सृजति। उक्तञ्च विवरणकारेण—'यद्यप्यसावविद्या चिन्मात्रसम्बन्धिनी जीवब्रह्मणी विभजते, तथापि ब्रह्मस्वरूपमुपेक्ष्य जीवभाग एव पक्षपातिनी संसारं जनयेत्'[४]।

अयं भावः—यथा न्यायनये नित्येषु विकारहीनेषु परमाणुषु ईश्वरेच्छाशक्तिवशात् क्रिया सञ्जायते। ततः परमाणुद्वयस्यैव द्व्यणुकं द्व्यणुकत्रयस्यैकस्त्रसरेण्वादिक्रमेण पृथिव्यादिद्रव्याणामुत्पत्तिः। तत्रेश्वरेच्छारूपशक्त्या एव प्राधान्यम्। सांख्यसिद्धान्ते मूलप्रकृतिरविकृतिस्ततोऽहंतत्त्वमुत्पद्यते। तस्माच्च पञ्चतन्मात्रादिक्रमेण प्रपञ्चसृष्टिः।

कुत्रचिदीश्वरेच्छाऽसौ मायाऽविद्यास्वरूपिणी ।
प्रकृतिः सांख्यशास्त्रे च प्रपञ्चोत्पत्तिकारणम् ।।
स्वतन्त्रापि पराधीना ब्रह्मसङ्केतानुवर्तिनी ।
स्वयं च जडरूपत्वाच्चैतन्यमाश्रयते मुदा ।।

प्रपञ्चो हि द्विधाः जाग्रतः स्वाप्निकश्चेति। तत्र जाग्रत्प्रपञ्चस्येव स्वप्नप्रपञ्चस्यापि निमित्तमविद्यैव। तत्र जागरितप्रपञ्चस्तु अविद्याया आवरणशक्त्यावृतं वस्तुतत्त्वमनादिवासनावासितविक्षेपात्मिकया विमोहशक्त्याऽन्यथैवावभासते, चाकचिक्याधिक्याच्छुक्तौ रजतवत्। द्विविधं हि विषयावरकमज्ञानम्। एकं विषयाश्रितं रज्ज्वादिविक्षेपोपादानभूतं कार्यकल्प्यम्, अन्यत् पुरुषाश्रितम् 'इदमहं न जानामि' इत्यनुभूयमानम्। यतश्च पुरुषाश्रितमज्ञानमधिष्ठानभूतरज्जुविषयकाज्ञानतादात्म्यापन्नसर्पादिविक्षेपे नोपादानम्। न च विषयाश्रितमज्ञानम् 'इदमहं न

१. वेदान्तकल्पतरुः, ब्र.सू.-२।१।१९; २. गीता-१३।१९।
३. श्वेता.उ.-२।२।९; ४. कठो.-२।२।७।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

जानामि' इति साक्षिरूपप्रकाशसम्बद्धम्। अतोऽज्ञानद्वयमावश्यकम्। 'तथा च घटादेः स्वावच्छिन्नचैतन्येऽध्यस्ततया विषयचैतन्यसत्तैव घटादिसत्ता। अधिष्ठान-सत्ताऽतिरिक्ताया आरोपितसत्ताया अनङ्गीकारात्'[1], 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति'[2]। यद्यपि ब्रह्मातिरिक्तं सर्वमेव जडं तथापि प्रत्यक्षतोऽनु-भूयमानवैलक्षण्येन कस्यचित् किञ्चित् स्वभावविशेषादिकमास्थेयम्। यथा घटदीपकौ द्वावपि जडौ, तथापि घटस्य स्वभाने आलोकचक्षुःसन्निकर्षा-द्यपेक्षाप्रदीपस्य तु आलोकानपेक्षा, स तु घटं प्रकाशयत् स्वात्मानमपि प्रकाशयति, एवमेव वृत्तिरपि विनैव वृत्त्यन्तरं तदर्थं जाता तं प्रकाशयन्ती स्वात्मानमपि प्रकाशयति। ननु ब्रह्मण एव वस्तुत्वे जीवस्य शुक्त्यादेश्चावस्तुत्वात्कर्तृत्वाद्यध्या-रोपे रजताद्यध्यारोपे चाव्याप्तिः स्यादिति चेन्न, ब्रह्मण्येव जीवत्वस्यापि कल्पितत्वात्कर्तृत्वादेश्च सोपाधिकभ्रमतयोपाध्यनुरक्ते ब्रह्मण्येवाध्यारोपाच्छुक्त्यादे-रपि रजताधिष्ठानचैतन्यावच्छेदकत्वेनाधिष्ठानत्वमुपचर्यते। न पुनस्तस्यैवाधिष्ठान-त्वमज्ञातं हि वस्त्वारोपाधिष्ठानम्। न च शुक्त्यादेरज्ञातत्वमस्ति जडत्वाच्चिन्मात्र-निष्ठत्वाच्चिन्मात्रविषयत्वाच्चाज्ञानस्य।

ततश्च सत्यस्य वस्तुनो मिथ्यावस्तुसम्भेदावभासोऽध्यारोपः। एतेन चिज्जडयोः परस्परतादात्म्याध्यासे शून्यमेव जगतस्तत्त्वं स्यादध्यस्तस्य मिथ्यात्वादिति केषाञ्चिच्चोद्यं निरस्तम्। भ्रमकाले परिस्फुरदंशस्य मिथ्यात्वेऽ-प्यपरिस्फुरतोऽशान्तस्य विद्यमानत्वात्। तदुक्तमभियुक्तैः—

'अध्यस्तमेव परिस्फुरति भ्रमेषु नान्यत्कथञ्चन परिस्फुरति भ्रमेषु ।
रज्जुत्वशुक्तिशकलत्वमरुक्षितित्व-चन्द्रैकताप्रभृतिकानुपलम्भनेन ।।

त्रिविधो हि जीवः, स्वोपाध्यवान्तरभेदेन विश्वतैजसप्राज्ञभेदाच्च। तत्रा-विद्यान्तःकरणस्थूलशरीरावच्छिन्नो जाग्रदवस्थाभिमानी विश्वः। स एव स्थूलशरीराभिमानरहित उपाधिद्वयोपहितः स्वप्नाभिमानी तैजसः। शरीरान्तः-करणोपाधिद्वयरहितोऽन्तःकरणसंस्कारावच्छिन्नाविद्यामात्रोपहितसुषुप्त्यभिमानी प्राज्ञः। तत्र जाग्रदवस्थायां स्वप्नावस्थायाञ्च वासनाप्रवर्तकमनोऽनुभावनया प्रपञ्चसृष्टिः। सुषुप्तौ तु वृत्तिसहितस्य मनसः पुरीततनाड्यां प्रविष्टौ सङ्कल्पादिराहित्यान्न किमपि भानम्। सङ्कल्पवृत्तावुपरतायां जगल्लयोऽयं पुनः प्रादुर्भावफलको नात्यन्तिको नाशः, उत्तरसर्गानुपपत्तेः। नापि सर्वथाऽभानम्, प्रतिभासमात्रशरीरस्य मिथ्यावस्तु-नोऽनवभासे तदभावस्यैवापत्तेः; किन्तु सुप्तेव तिष्ठति कार्य्यप्रवृत्त्यभावात्। यथा

---

१. विवरणप्रमेयसङ्ग्रहेऽध्यासप्रकरणे। २. वेदान्तपरिभाषा, प्रत्यक्षनिरूपणे;

CC-0. Sampurnanand University Collection. Digitized by eGangotri

स्फटिके जपाकुसुमसन्निधानाद्रक्तत्वावभासस्तत्रैव स्फटिकांशप्रमोषे यद् गगनत्वावभासः, तथैव शुद्धायां चिति मायोपाधिसान्निध्यादीश्वरत्वाध्यासः। सोऽयमात्माऽऽवरणविक्षेपशक्त्याऽविद्याया आश्रयः। तत्रावरणांशेन शुद्धरूपतिरोधानम्। विक्षेपांशेनेशादिस्थूलदेहान्तानां प्रतिभासः। तयोर्निवृत्तौ शुद्धचित्स्वरूपेणावतिष्ठते। तथा चोक्तम्—

'प्रकृतौ प्रविलीनेषु भेदेष्वेकत्वदर्शिनाम् ।
द्रव्यसत्त्वं प्रपद्यन्ते स्वाश्रया एव जातयः'[१] ।।

चित्तस्य द्रव्यरूपो वृत्त्याख्यः परिणाम इन्द्रियप्रणाल्या निर्गत्य विषयेण संयुज्य सूक्ष्मावस्थारूपविषयवासनावशात् तत्तद्विषयाकारेण परिणमते। न तु तस्यां वृत्तौ संयुक्तबाह्यविषयप्रतिबिम्बः, स्वप्नादौ बाह्यविषयासंयोगेन तत्प्रतिबिम्बासम्भवात्। तत्रोभयोरियान् भेदः, जागरितप्रपञ्चभाने बहिर्मुखेन्द्रियप्रणाल्या[२] निर्गत्य चित्तवृत्तिर्बाह्यविषयेण संयुज्य तदाकारेण परिणमते। 'जागरितस्थानो बहिःप्राज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः। स्वप्नप्रपञ्चभाने अन्तर्मुखेन्द्रियप्रणाल्या वासनामात्रेण कल्पिते व्यवहारातीते विषये संयुज्य चित्तवृत्तिर्वासनाकल्पितविषयाकारेण परिणमते'[३]। 'स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक्तैजसः। अविद्याऽऽवृतस्य शुक्त्यादि-रूपाधिष्ठानस्य रजतादिरूपेण विवर्त एव प्रपञ्चसृष्टिः। तृषिता मृगा अपां धाराः पश्यन्ति, न च ताः सन्ति, यथा गन्धर्वनगराणि दूरतो दृश्यन्ते, उपसृत्य च नोपलभ्यन्ते। तथैव बहिर्देशेऽसत एव जगत्प्रत्ययः'[४]। तथा चोक्तम्—

'मृगतृष्णायामुदकं शुक्तौ रजतं भुजङ्गमो रज्ज्वाम् ।
तैमिरिकचन्द्रयुगवद् भ्रान्तमखिलं जगद्रूपम्'[५] ।।

निद्राक्षये व्यावहारिकप्रपञ्चज्ञानेन निवर्त्यशीलो व्यवहारायोग्यः स्वप्नप्रपञ्चो व्यावहारिकसत्ताकशुक्त्याद्यधिष्ठानज्ञानेन निवर्त्यशीलरजतादिवद् भ्रम इति केचित्। तथा चाह भाष्यकारः—'किं चाहमद्य स्वप्ने हस्तिनमद्राक्षं नेदानीं तं पश्यामीति दृष्टमेव प्रतिबुद्धः प्रत्याचष्टे'[६]। वेदान्तिनस्तु सर्वस्यापि प्रपञ्चस्य मायामयत्वान्नोभयोर्भेदः। शुक्त्यधिष्ठाने भ्रमेण प्रतीयमानरजतादिदृष्टान्तेन जगत्प्रत्ययं मन्यमाना ब्रह्मभिन्नं सर्वं मिथ्यैवावगच्छन्ति। यथा व्यावहारिकसत्ताज्ञानेन भ्रमसत्ता निवर्तते, तथैव व्यावहारिकसत्ताऽपि त्रिकालाबाध्यपारमार्थिकसत्ताज्ञानेन निवर्तते।

१. श्वेता.उ.-६।१४; २. संक्षेपशारीरके; ३६।
३. वाक्य.-३।४३; ४. माण्डूक्यो.-१।२।
५. तत्रैव-१।३; ६. प.सा.-२२।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

उभयोर्निवर्त्यशीलत्वात् समत्वमिति न तयोर्भेदः। उक्तञ्च 'मायामात्रं तु कात्स्न्येंनानभिव्यक्तस्वरूपत्वात्'[१]।

स्वप्नदृष्टान्तेन प्रपञ्चसर्जनं मन्यमाना वेदान्तिनो वस्तुतो बाह्यसत्ताशून्या एव, अनादिवासनावासितचित्तवृत्तौ स्थिता विषया भासन्ते। 'स्वाप्नो विकारो वासनामय एव, न तु पारमार्थिकोऽस्ति'[२]। तथा च श्रुतिः— 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ, रथान् रथयोगान् पथः सृजते'[३],'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्'[४]। स्वाप्निकप्रपञ्चस्य मिथ्यात्वं प्रसाध्य तद्दृष्टान्तेनैव जागरितस्य मिथ्यात्वं विचिन्वन्ति। यथा बाह्यसत्ताहीनमपि मायाशक्तिप्रसारिपण्यापणगृहप्रसादपुञ्जनपदव्यवहाराकीर्णमिव गन्धर्वनगरं चक्षु-रिन्द्रियव्यवहारयोग्यम्। यथा च स्वप्ने प्रियसंयोगवियोगजन्यसुखाद्यनुभवः, तथैव जागरितप्रपञ्चोऽपि।

'स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा।
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः'[५] ।।

सर्वत्रापि मायाशक्त्यैव प्रपञ्चसृष्टिः, ब्रह्म तु निमित्तमात्रम्। 'सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकैव सत्यम्'[६]। एवमेव मायामयजागरितस्वप्नादिप्रपञ्चसृष्टिः सत्यन्तु ब्रह्मैव नान्यत् किञ्चित्। सा चाविद्या—

नासद्रूपा न सद्रूपाऽस्या अनिर्वचनीयता।
प्रपञ्चोऽपि तदापन्नोऽनिर्वचनीय उच्यते।
उपादत्ते च स्वं रूपं प्रपञ्चोत्पत्तिहेतवे।
तद्विकारं समासाद्य जगदेतत् प्रवर्तते।।
सत्त्वासत्त्वप्रधानत्वान्मायाऽविद्येति कथ्यते।
एतदुपाधिना ब्रह्मजीवेश्वराभिमानिनौ।।
जीवोऽविद्यावशीभूतो मायाऽवच्छिन्न ईश्वरः।
साक्षिणौ च समाख्यातौ तदुपाधिस्वरूपतः।। इति।



---

१. ब्र.सू.-३।२।३;  २. शा.भा., ब्र.सू.-२।३।४
३. बृहदा.उ.-४।३।१०;  ४. तत्रैव-४।३।१०।
५. माण्डू.-२।३१;  ६. छान्दो.उ.-६-१-४।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# महाकविभवभूतिनाट्यसाहित्ये जीवनमूल्यदर्शनम्

**डॉ० बालकृष्णशर्मा**

सहायकप्राध्यापकः, साहित्यविभागाध्यक्षश्च
शासकीयसंस्कृतमहाविद्यालये
ग्वालियरनगरे



क्रान्तदर्शिनः कवयः काव्यरचनासु इतिवृत्तसमाश्रयेण जीवनदर्शनं प्रस्तुवन्ति। अस्यां जीवनदर्शनप्रस्तुत्यामेव कवेः कवित्वं भासते, न तु कथा-वस्तुनि। यतो हि कथावस्तुप्रस्तुतिस्त्वितिहासादीनां विषयः। यथोक्तं ध्वन्यालोक-कारेणानन्दवर्धनेन—

'न हि कवेरितिवृत्तमात्रनिर्वहणेन किञ्चित्प्रयोजनमितिहासादेव तत्सिद्धेः'[१]।

इदं जीवनदर्शनं कविः कान्तासम्मितोपदेशरूपे व्यञ्जनावृत्त्या निबध्नाति येन तस्य काव्यमतितरां शोभामावहति। अत एव ध्वनिकारेणोक्तम्—

'सारभूतोऽर्थः स्वशब्दानभिधेयत्वेन प्रकाशितः सुतरामेव शोभामावहति। प्रसिद्धिश्चेयमस्त्येव विदग्धविद्वत्परिषत्सु यदभिमततरं वस्तु व्यङ्ग्यत्वेन प्रकाश्यते न साक्षाच्छब्दवाच्यत्वेन'[२]।

जीवनदर्शने मानवजीवनस्य विविधपक्षाः समाहिताः। तत्र सत्पक्षोऽपि विराजते असत्पक्षश्च। काव्ये नायकादिपात्राण्याश्रित्य जीवनस्य सत्पक्षः प्रकाश्यते, प्रतिनायकादिपात्राण्याश्रित्य च जीवनस्यासत्पक्षः प्रदर्श्यते। सदसतोः सङ्घर्षं प्रदर्श्य पार्यन्तिकरूपेण कविः सत्पक्षस्योत्कर्षं निबध्नाति। अत्र सत्पक्षप्रतिष्ठापनोद्देश्येन कविर्नायकादीनां पात्राणां येषां गुणानां निबन्धनं विदधाति, त एव जीवनमूल्य-रूपेण ज्ञायन्ते। अतो जीवनमूल्यपदेन तत्तत्पात्रोत्कर्षापकर्षप्रतिपादकवैशिष्ट्यानि गृह्यन्ते। यतो हि काव्ये नाट्ये च सत्पक्षोत्कर्षप्रतिपादनमेव भवति कवेः परमं प्रयोजनं यस्य सम्यगधिगतये स असत्पक्षस्यापि विन्यासं करोति, अतो

---

१. ध्वन्यालोके-३।४ वृत्तौ; २. तत्रैव-४।५ वृत्तौ।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

जीवनमूल्यदर्शनसन्दर्भे सत्पक्षस्यैव विमर्शो विधीयते। अपि च 'शब्दोपदेशापशब्दोपदेशयोर्मध्ये शब्दोपदेश एव ज्यायः'[१] इति पातञ्जलमहाभाष्यदर्शितसरण्या सदसत्पक्षयोर्मध्ये सत्पक्षविन्यास एव ज्यायो भवति येन जीवनमूल्यप्रसङ्गे सत्पक्षविमर्श एव श्रेयस्करः।

इत्थं प्रतीयते यज्जीवने उत्कर्षाधायकतत्त्वानां सद्भावेन विनिवेशनेन वा तद् बहुमूल्यं भवति, अपकर्षाधायकतत्त्वानां सद्भावेन विनिवेशनेन वा च तद्धेयं भवति। कस्यचिज्जीवने किं तत्त्वमुत्कर्षकारि किञ्चापकर्षकारीति कविना सम्यग्रूपेण लोकशास्त्राभ्यामवगन्तव्यम्। अस्माद्धेतोः कवये लोकशास्त्रयोर्बोधरूपिणी उचितानुचितविवेकरूपिणी वा व्युत्पत्तिरपेक्षिता भवति। अतः काव्यशास्त्रिभिः काव्यहेतुनिरूपणावसरे व्युत्पत्तिरपि निरूपिता। तद्यथा—

'छन्दोव्याकरणकलालोकस्थितिपदपदार्थविज्ञानात् ।
युक्तायुक्तविवेको व्युत्पत्तिरियं समासेन'[२] ।।
'उचितानुचितविवेको व्युत्पत्तिरिति यायावरीयः'[३]।

जीवनमूल्यव्याख्यायां भवभूतिः परमसिद्धहस्तो दत्तचित्तश्च प्रतिभाति। स जीवनमूल्याकलनाय गुणरूपमानदण्डमुररीकरोति। तद्यथा तस्याधोलिखितेन पद्येन प्रकटीभवति—

'शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढयति ।
शिशुत्वं स्त्रैण्यं वा भवतु ननु वन्द्यासि जगतां
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः'[४] ।।

अर्थाद् यावन्मात्रं यस्य जीवनं गुणनिर्भरं भवति तावन्मात्रमेव तस्य जीवनस्यापेक्षा भवति, जीवनापेक्षानुसारेण च जीवनमूल्यं निश्चीयते। जीवनमूल्यानुसारेण कस्यचिज्जनस्य महत्त्वं स्थानं वा लोके निर्धार्यते। तद्यथा भवभूतिनोक्तम्—

'कष्टं जनः कुलधनैरनुरञ्जनीयस्तन्नो यदुक्तमशिवं न हि तत्क्षमं ते ।
नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा मूर्ध्नि स्थितिर्न चरणैरवताडनानि'[५] ।।

---

१. महाभाष्ये पस्पशाह्निके; २. रुद्रटकाव्यालङ्कारे-१।१८।
३. काव्यमीमांसायाः प्रथमाधिकरणस्य पञ्चमाध्याये।
४. उत्तररामचरिते-४।११; ५. तत्रैव-१।१४।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

जीवनमूल्यविवेचनप्रसङ्गे ज्ञातव्यं यदिदं द्विधा भवति व्यापकजीवनमूल्यं प्रासङ्गिकजीवनमूल्यञ्चेति भेदाभ्याम्। तत्र ये गुणाः सार्वकालिकाः सार्वभौमाः सार्वजनीनाश्च ते व्यापकजीवनमूल्ये उपादीयन्ते, ये च यथाकालं—

यथास्थानं यथाप्रसङ्गं वा ग्राह्यास्ते प्रासङ्गिकजीवनमूल्ये समादधति। महाकविभवभूतिः स्वनाटकेषु उभयविधगुणान् यथाप्रसङ्गं निरूपयति। उत्तररामचरितेऽतिख्याते करुणरसप्रधाने स्वसर्वोत्कृष्टनाटके कविना कारुण्यस्नेहदयासौख्यप्रियवृत्तिवाक्संयमकल्याणीमतिप्रभृतिव्यापकजीवनमूल्यानां यथास्थानं सुष्ठुतरं निबन्धनं कृतमस्ति। एवमेवातिथ्यप्रजावात्सल्यापत्यस्नेहदाम्पत्यप्रेमपातिव्रत्यशिष्यसमदृष्टिप्रभृतिप्रासङ्गिकजीवनमूल्यानामपि नाटकेऽस्मिन् यथाप्रसङ्गं विन्यासो विहितो नाटककारेण। अतोऽत्र समासेन केषाञ्चन जीवनमूल्यानां विमर्शो विधीयते।

'उत्तररामचरितमिति' प्रथिते रामस्य राज्यसिंहासनाधिरोहणोत्तरकालिकेतिवृत्तनिरूपके नाटके कविरादर्शनृपतिजीवनमूल्यादर्शपतिजीवनमूल्ययोर्मध्ये द्वन्द्वं प्रस्तौति। रामो द्वयोरादर्शयोः प्रतिष्ठापनाय यथाशक्यमाजीवनं यतते। एकत्र स 'राजा प्रकृतिरञ्जनात्' इति न्यायेन राज्ञो जीवनमूल्यं व्यञ्जयितुमित्थं वदति—

'स्नेहं दयां च सौख्यं च यदि वा जानकीमपि ।
आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा'[१] ।।

अपरत्रादर्शपत्युर्जीवनमूल्यख्यापनाय स प्रियाया लोकोत्तरं स्वरूपं वर्णयन्नाह—

'इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः'[२] ।।

नाटकेऽस्मिन् महाकविभवभूतिर्व्यापकजीवनमूल्यप्रासङ्गिकजीवनमूल्ययोर्मध्ये सङ्घर्षं प्रदर्श्य व्यापकजीवनमूल्यस्य महत्तां प्रतिपादयति, तथापि प्रासङ्गिकजीवनमूल्यस्य महत्तां न न्यूनीकरोति। अस्मादेव करणाद् रामः स्वयमेव सीतां परित्यजति, तथापि तस्या निरन्तरमभावमनुभवति तीव्रतया। तद्यथा प्रतिभाति कुशवचनेन—

---

१. उत्तररामचरिते-१।१२; २. तत्रैव-१।३८।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

'विना सीतादेव्या किमिव हि न दुःखं रघुपतेः
प्रियानाशे कृत्स्नं किल जगदरण्यं हि भवति।
स च स्नेहस्तावानयमपि वियोगो निरवधिः
किमेव त्वं पृच्छस्यनधिगतरामायण इव'[१] ।।

रामस्य जीवने व्यापकजीवनमूल्यानां प्रासङ्गिकजीवनमूल्यानाञ्च समानभावेन प्रदर्शनायैव भवभूतिस्तं लोकोत्तररूपेण प्रस्तौति। तद्यथा—

'वज्रादपि कठोराणि मृदूनि कुसुमादपि।
लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति'[२] ।।

नाटककार एकत्र राममुखात् 'विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा'[३], 'म्लानस्य जीवकुसुमस्य विकासनानि',[४] 'इयं गेहे लक्ष्मीरियममृत-वर्तिर्नयनयोः',[५] 'अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्'[६] 'त्वया जगन्ति पुण्यानि,'[७] 'न किञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति,'[८] चिराद्वेगारम्भी प्रसृत इव तीव्रो विषरसः'[९] इत्यादिप्रियाप्रीतिप्रतिपादकानि वचनानि निःसारयति सीताविरहितस्य रामस्य पुटपाकप्रतीकाशत्वञ्च निरूपयति। तद्यथा—

'अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः।
पुटपाकप्रतीकाशो रामस्य करुणो रसः'[१०] ।।

अपरत्र च कविः सीताया मुखात् 'अत एव राघवकुलधुरन्धर आर्यपुत्रः,'[११] 'तस्मै कोपिष्यामि यदि तं प्रेक्षमाणा आत्मनः प्रभविष्यामि',[१२] 'जाने पुनः प्रत्यागतमिव जीवितं त्रैलोक्यस्य,'[१३] 'त्वमेव सखि वासन्ति दारुणा कठोरा च यैवमार्यपुत्रं प्रदीप्तं प्रदीपयसि,'[१४] 'अहमेतस्य हृदयं जानामि ममाप्येषः,'[१५] 'नमो नमोऽपूर्वपुण्यजनितदर्शनाभ्यामार्यपुत्रचरणकमलाभ्याम्'[१६] इत्यादिप्रियप्रीतिप्रतिपादकानि वचनानि निःसारयति, येन पत्युर्दृष्ट्यां प्रियायाः प्रियायाश्च दृष्ट्यां पत्युर्जीवनमूल्यं व्यञ्जितम्। उत्तररामचरिते नाटककारः सीतारामयोरसाधारणदाम्पत्यप्रेमव्याजेन दाम्पत्यप्रेमरूपमुदात्तजीवनमूल्यं परमप्रभावोत्पादकतया चित्रयति। तद्यथा—

---

१. उत्तररामचरिते-६।३०; २. तत्रैव-२।७; ३. तत्रैव-१।३५।
४. तत्रैव-१।३६; ५. तत्रैव-१।३८; ६. तत्रैव-१।३९।
७. तत्रैव-१।४३; ८. तत्रैव-२।१९; ९. तत्रैव-२।२६।
१०. तत्रैव-३।१; ११. तत्रैव-१।१२ अनन्तरम्।
१२. तत्रैव-१।५१ अनन्तरम्; १३. तत्रैव-३।१० अनन्तरम्।
१४. तत्रैव-३।२७ अनन्तरम्; १५. तत्रैव-३।१२ अनन्तरम्।
१६. तत्रैव-३।४६ अनन्तरम्।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

'अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात्परिणते यत्स्नेहसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते'[१] ।।

अद्यत्वे निरन्तरं ह्रासोन्मुखदाम्पत्यजीवनमूल्यस्य सञ्जीवनाय भवभूतेः पद्यमिदं भवितुं शक्नोति किञ्चिदसाधारणप्रेरणावचनम्। यतो ह्यत्र दाम्पत्यजीवनस्य कश्चिदलौकिकादर्शः प्रस्तुतः।

दाम्पत्यप्रेम्णा तुल्यमपत्यप्रेम्णोऽपि चित्रणं भवभूतिर्जीवनमूल्यत्वेन करोति। यतो ह्यपत्यं नाम दम्पत्तिस्नेहप्रकर्षत्वम्। यथोक्तं भवभूतिना—'प्रसवः खलु प्रकर्षपर्यन्तः स्नेहस्य। परं चैतदन्योन्यसंश्लेषणं पित्रोः'[२]।

अद्यत्वे निरन्तरं क्षीयमाणापत्यप्रेम्णः प्रतिष्ठापनाय भवभूतेरधोलिखितं पद्यं भवितुमर्हति किञ्चिदनिर्वचनीयप्रेरकतत्त्वम्। तद्यथा—

'अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात् ।
आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते'[३] ।।

साधुपुरुषाणां जीवनमूल्यं तेषां वृत्तौ वाचि मत्याम् अनवगीतपरिचये च विराजते। यथा भवभूतिनोक्तम्—

'प्रियप्रायावृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद् वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते'[४] ।।

जीवने करुणायाः सर्वोच्चस्थानं भवतीति स्वीकुर्वन् भवभूतिः कारुण्यरूप-जीवनमूल्यं प्रधानतया व्यञ्जितवान् स्वोत्तररामचरिते। नाटकेऽस्मिन् आद्योपान्तं कारुण्यमहिमा विराजते येन भवभूतिविषये उक्तिरियं प्रथिता जाता—'कारुण्यं भवभूतिरेव तनुते'।

वस्तुतः कारुण्येन विना जीवनं जीवनमेव न भवति। इदं तथ्यं कविना सीतारामयोः कारुण्यनिर्भरचरिताभ्यां सूचितम्। रामायणे आदिकविना या

१. उत्तररामचरिते-१।३९; २. तत्रैव-३।१७ प्राक्।
३. तत्रैव-३।१७; ४. तत्रैव-२।२।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कारुण्यभावना सूत्रिता 'शोकः श्लोकत्वमागतः'[१] इत्येवंवादिना निर्व्यूढा च सीतात्यन्तवियोगपर्यन्तमेव स्वप्रबन्धमुपरचयता तस्याः कारुण्यभावनायाः पराकष्ठा दृश्यते भवभूतेरुत्तररामचरिताख्ये नाटके। अत्र करुणा शरीरिणी भूत्वा सीताव्याजेन स्वयमेव विराजते। तद्यथा—

'परिपाण्डुदुर्बलकपोलसुन्दरं दधती विलोलकबरीकमाननम्।
करुणस्य मूर्तिरथवा शरीरिणी विरहव्यथेव वनमेति जानकी'[२] ।।

इत्थं नाटकेऽस्मिन् विविधजीवनमूल्यानां परमहृदयावर्जकरूपेण विन्यासः कृतोऽस्ति येनेदं न केवलं नाम्ना उत्तरमपि तु वर्ण्येनाप्युत्तरत्वं भजते। उत्तररामचरितेन तुल्यं महावीरचरितेऽपि कविना सुव्यक्तानि विविधजीवनमूल्यानि। अत्र तेन कतिपय-जीवनमूल्यानां माहात्म्यप्रतिपादनाय द्वन्द्वस्थितेश्चारुतया निबन्धनं कृतम्। तद्यथा भ्रातृप्रेमरूपजीवनमूल्यस्य मार्मिकाभिव्यञ्जनायै द्वन्द्वोऽयं कविना चित्रितः—

'अपरिष्वज्य भरतं नास्ति मे गच्छतो धृतिः।
अस्मत्प्रवासदुःखार्त्तं न त्वेनं द्रष्टुमुत्सहे'[३] ।।

अर्थाद् रामो दुःखार्त्तं भरतं द्रष्टुमपि न समर्थः, तस्य च दर्शनेन विना शान्तिमपि न लभते इत्यप्रतिमभ्रातृप्रेमरूपजीवनमूल्यव्यञ्जना भवत्यत्र। वाल्मीकिरामायणीयकथावस्तुनि यत्र कुत्रचित् कैकेयीरामादीनां जीवनमूल्येषु न्यूनता दृश्यते तत्र सर्वत्र भवभूतिः स्वाभाविकपरिवर्तनं कृत्वा नवीनतया मौलिकतया वा कथावस्तु प्रास्तौत्। तद्यथा कैकेयीमन्थराबालिप्रभृतिवृत्तान्तेषु कविना प्रभूतपरिवर्तनं कृतं रामादीनां वृत्तञ्च चरित्रपरिष्कारपुरस्सरं श्लाघ्यरूपे प्रस्तुतम्। अनेन भवभूतेरादर्शजीवनमूल्यं प्रति सहजा निष्ठा भासते।

मालतीमाधवाख्ये प्रकरणरूपके भवभूतिना प्रेमरूपजीवनमूल्यस्य गाम्भीर्येण प्राचुर्येण उदात्ततया च निबन्धनं कृतमस्ति। अत्र स्त्रीणां कृते भर्तुर्जीवनमूल्यं पुंसां कृते च पत्न्या जीवनमूल्यं विशदयन् कविराह—

'प्रेयो मित्रं बन्धुता वा समग्रा सर्वे कामाः शेवधिर्जीवितं वा।
स्त्रीणां भर्ता धर्मदाराश्च पुंसामित्यन्योन्यं वत्सयोर्ज्ञातमस्तु'[४] ।।

पद्यमिदमाधुनिकसमये प्रेमपथसञ्चरतां स्त्रीपुंसां कृते किमप्यपार्थिवपाथेयं भवितुमर्हति। प्रकरणेऽस्मिन् कविः प्रेम्णो नानाचेष्टात्मकरूपं निरूपयन् तस्यागाधतां सूचयति। तद्यथा—

---

१. वाल्मीकिरामायणे-१।३।४०; २. उ.यराच.-३।४।
३. महा.च.-४।४३; १. मालतीमाधवे-६।१८।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

'प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसा परिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः'[१]॥

अत्र कविर्मालतीव्याजेन प्रेम्णः उद्दामरूपचित्रणेऽपि न सङ्कोचमञ्चति येन कामपुरुषार्थस्य प्रबलता निरतिशयसंयमसापेक्षता च व्यज्येते। तद्यथा—

'मनोरोगस्तीव्रो विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमो ज्वलति विधुतः पावक इव।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती'[२]॥

प्रकरणेऽस्मिन् प्रेम्णा सह सौहार्दरूपजीवनमूल्यस्यापि मञ्जुलाभिव्यक्ति-र्दृश्यते। निखिले कथावस्तुनि सुहृद्व्यापारो विविधरूपेषु विन्यस्तः। कुत्रचित् कामन्दिकी माधवस्य साहाय्यं विदधाति, कुत्रचिद् मकरन्दो मैत्रीभावम्, कुत्रचिच्च सौदामिनीप्रभृतययो मित्रेष्टसाधने दत्तावधाना दृश्यन्ते। अत्र भवभूतिना कामन्दिकी-सौदामिनी-मकरन्द-मदयन्तिकावलोकिता-लवङ्गिका-बुद्धरक्षिता इत्येतानि पात्राणि सौहार्दभावं निर्वोढुं कल्पितानि येन सौहार्दभावरूपजीवनमूल्यस्य माहात्म्यं व्यज्यते। मैत्रीभावस्योदात्ततां व्यञ्जयितुकामः कविः कामन्दिकीव्याजेनाह—

'यन्मां विधेयविषये स भवान्नियुङ्क्ते
स्नेहस्य तत्फलमसौ प्रणयस्य सारः।
प्राणैस्तपोभिरथवाभिमतं मदीयैः
कृत्यं घटेत सुहृदो यदि तत्कृतं स्यात्'[३]॥

अर्थाद् मित्रजीवनस्य निखिलसाफल्यं सकलोपयोगित्वं वा सौहार्दभावनिर्वाहे निहितं भवति। एतस्मादेव कारणात् सन्मित्रदुर्लभत्वं जगति प्रसिद्धम्।

एवं महाकविभवभूतेर्नाट्यसाहित्यपरिशीलनेन तथ्यमिदं विशदीभवति यद् विविधजीवनमूल्यानां विन्यासे प्रतिष्ठापने चासौ कविरभिनिवेशपूर्वकं यतमानो दृश्यते। तत्तज्जीवनमूल्यानां निबन्धने कवेरादर्शोन्मुखीप्रवृत्तिः सर्वत्र प्रसरतुकामा अवलोक्यते, येन कवेरादर्शजीवनमूल्यानि प्रति नैसर्गिकीनिष्ठा प्रकटीभवति।

---

१. मालतीमाधवे-५।७; २. तत्रैव-२।१; ३. तत्रैव-१।१०।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

संस्कृतसाहित्यमहाकविषु भवभूतेर्महनीयस्थानभाजनमूले अयमेव हेतुरस्ति। तस्य आदर्शोन्मुखीप्रवृत्तिः, उदात्ततामण्डितजीवनमूल्यप्रस्तुतिः, गाम्भीर्यभरितजीवनदर्शनाभिव्यक्तिः, मर्यादोच्छलितप्रीतिरीतिः, गरिमामयदाम्पत्यप्रीतिः, नैसर्गिकाभालसितकाव्यकलासृष्टिः, लालित्यभूषितभाषासम्पत्तिः, रमणीयताखचितरचनावृत्तिः, चारुताचित्रितकल्पनाशक्तिरित्येतानि सर्वाणि वैशिष्ट्यानि कवेर्भवभूतित्वं प्रमाणयन्ति।

भवभूतिनाट्यसाहित्यपरिशीलनानन्तरमत्र प्रश्नः समुदेति यत्कविः कस्मात् कारणात् काव्ये जीवनमूल्यव्यञ्जकानि वैशिष्ट्यानि निबध्नाति? केन प्रयोजनेन वा स जीवनादर्शभूतानि तथ्यानि पात्रचरितेषु प्रधानतया समादधाति? विषयेऽस्मिन् काव्यशास्त्रिभिर्बहुधा विचारितम्। तत्र कान्तासम्मितोपदेशरूपेण प्रभावोत्पादकतया लोकशिक्षायै शाश्वतमूल्यसंरक्षणाय च रामादिवदाचरणप्रेरणायै च कविः काव्ये जीवनमूल्यव्यञ्जकान् गुणान् चित्रयति नायकादिचरितेषु। यथाह काव्यप्रकाशकार आचार्यमम्मटः—'प्रभुसम्मितशब्दप्रधानवेदादिशास्त्रेभ्यः सुहृत्सम्मितार्थतात्पर्यवत्पुराणादीतिहासेभ्यश्च शब्दार्थयोर्गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत्काव्यं लोकोत्तरवर्णनानिपुणकविकर्म तत्कान्तेव सरसतापादनेनाभिमुखीकृत्य 'रामादिवद्वर्तितव्यं न रावणादिवदित्युपदेशं च कवेः सहृदयस्य च करोतीति सर्वथा तत्र यतनीयम्'[१]।

धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टये मानवमनसो यथोचितरूपेण प्रवर्तनायापि तत्तत्पुरुषार्थाचरणरतनायकादिचरितचित्रणेन कविः पुरुषार्थसम्बद्धजीवनमूल्यप्रतिपादकानि तत्त्वानि काव्ये विनिवेशयति। तद्यथा धर्मपुरुषार्थाचरणरतरामयुधिष्ठिरादीनां चरितविन्यासेन कवय आदर्शजीवनयापनाय प्रेरयन्ति। कामपुरुषार्थाचरणरतवत्सराजादीनां चरितविन्यासेन ते काममाहात्म्यं व्यञ्जयति। एवमेव चन्द्रगुप्तचाणक्यादीनां चरितविन्यासेन काव्यकारा अर्थपुरुषार्थमाहात्म्यं प्रमाणयन्ति, जीमूतवाहनादीनाञ्च चरितविन्यासेन मोक्षपुरुषार्थं प्रति प्रवृत्तिमुत्पादयन्ति। रामायणमहाभारतादिकाव्येषु त्वेकत्रैव विभिन्नपुरुषार्थाचरणरतचरितानां विन्यासो विलसति। महाभारते भगवान् वेदव्यासः स्पष्टमेवोद्घोषयति—

'धर्मे ह्यर्थे च कामे च मोक्षे च भरतर्षभ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्'[२]॥

आदर्शचरितविन्यासव्याजेन नायकादिषु गुणगणप्रदर्शनमाध्यमेन वा कवयो लोकेभ्य आदर्शाचरणाय शिक्षां ददति। यथाह भगवान् मनुः —

---

१. काव्यप्रकाशे-१।२ वृत्तौ; २. महाभारते।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः'[१] ।।

लोकशिक्षणरूपकार्यमिदं सम्पादयितुं कवयो नाभिधावृत्तिं समाश्रयन्ति, अपि तु व्यञ्जनावृत्तिसमाश्रयेण ते लोकं हृदयावर्जकरीत्या प्रभावोत्पादकतया च शिक्षयन्ति। यतो ह्यभिधावृत्तिसमाश्रितचरितं न तथा प्रभावोत्पादने लोकशिक्षणे च कल्पते यथा व्यञ्जनावृत्तिसमाश्रयेण सम्भवति। एतस्मादेव कारणाद् ध्वन्यालोककारेणानन्दवर्धनेनोक्तम्—'सारभूतोऽर्थः स्वशब्दानभिधेयत्वेन प्रकाशितः सुतरामेव शोभामावहति। प्रसिद्धिश्चेयमस्त्येव विदग्धविद्वत्परिषत्सु यदभिमततरं वस्तु व्यङ्ग्यत्वेन प्रकाश्यते न साक्षाच्छब्दवाच्यत्वेन'[२]। एवं व्यञ्जनावृत्तिसमाश्रयेण सुकुमाररीत्या चतुर्वर्गशिक्षणपरं काव्यं लोके प्रतिष्ठितम्। स्वलक्ष्यमधिगन्तुं तत् कस्यचित् श्रेष्ठपुरुषस्याचरणं ललितशब्दार्थयोजनया निबध्नाति लोकश्च तदधीत्य श्रुत्वा समवलोक्य वा तथैव परिवर्तते। यथाह भगवान् श्रीकृष्णः —

'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते'[३] ।।

काव्यस्य लक्ष्यो भवति लोकः। लोकमेव प्रीणयितुं वा शिक्षयितुं वा तत् प्रवर्तते। कार्यमिदं तत् श्रेष्ठजनचरितविन्यासेन साधयति। अतो नाट्यशास्त्रकारो भरतो भूयोभूयो नाट्यस्य लोकोपदेशकत्वं लोकोपकारकत्वं वा प्रतिपादयति। तद्यथा—

'धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम् ।
लोकोपदेशजननं नाट्यमेतद् भविष्यति' ।।

काव्यालङ्कारकारभामहाचार्योऽपि काव्यं धर्मार्थकाममोक्षाणां वैचक्षण्यं करोतीति कथयन् तत्र पुरुषार्थचतुष्टयप्रवृत्तिपरकचरितनिबन्धनौचित्यं प्रतिपादयति, काव्ये च जीवनमूल्याधायकतत्त्वानां गुणनां वा अभिनिवेशपूर्वकं विन्यासाय प्रेरयति। तद्यथा—

'धर्मार्थकाममोक्षाणां वैचक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिबन्धनम्' ।।

कार्यमिदं काव्यं सुकुमारक्रमेण हृदयावर्जकरूपेणाविद्वदङ्गनाबालप्रतीतार्थरूपेण च साधयति। अत एवोक्तं रुद्रटकुन्तकाभ्याम्—

---

१. मनुस्मृतौ; २. ध्वन्यालोके-४।५ वृत्तौ।
३. श्रीमद्भगवद्गीतायाम्-३।२१।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

'ननु काव्येन क्रियते सरसानामवगमश्चतुर्वर्गे ।
लघु मृदु च नीरसेभ्यस्ते हि त्रस्यन्ति शास्त्रेभ्यः' ।।

'धर्मादिसाधनोपायः सुकुमारक्रमोदितः ।
काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः' ।।

वस्तुतोऽत्रैव काव्यं शास्त्राद् विभिद्यते। यतो हि शास्त्रेऽपि जीवनमूल्याधायकवैशिष्ट्यानां दयादाक्षिण्यकरुणासत्यवादितातिथिसत्काराचार्यभक्तिप्रभृतीनामनुशासनं विद्यते, येषामधिगतिर्व्यङ्ग्यविधायां काव्येषु भवति; परन्तु शास्त्रे तदनुशासनं प्रभुसम्मितोपदेशरूपेण शुष्कक्रमेण चोच्यते, काव्येषु च कान्तासम्मितोपदेशरूपेण सुकुमारक्रमेण च व्यज्यते। अतः काव्यगतजीवनमूल्याधायकगुणानामनुशासनं मृद्वौषधवत्प्रभावशालि भवति, शास्त्रगतं च तत् कटुकौषधवत् प्रभवति। यथोक्तमाचार्यकुन्तकेन—

'कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम् ।
आह्लाद्यामृतवत् काव्यमविवेकगदापहम्' ।।

विवेचनेनानेन तथ्यमिदं विशदीभूतं यज्जीवनमूल्याधायकविभिन्नगुणानां वैशिष्ट्यानां वा विन्यासस्य भूयानवसरो भवति काव्येषु नाटकेषु च। अत एव महाकवयो नाटककाराश्च स्वस्वकाव्यरचनासु प्रभावोत्पादकतया लालित्यान्वितरीत्या च जीवनमूल्यव्यञ्जकान् गुणान् चित्रयितुं दत्तावधाना दृश्यन्ते। रामकृष्णयुधिष्ठिरादीनां चरितमाश्रित्य महाकाव्यनाटकादीनां प्रणयनपरम्परामूले इदमेव कारणमस्ति। रामायणमहाभारतश्रीमद्भागवतादीनामुपजीव्यतामूलेऽप्ययमेव हेतुर्वर्तते। महाकविभवभूतिर्जीवनमूल्याधायकगुणानां बाहुल्येन विन्यासस्य प्रबलपक्षधरो नाटककारोऽस्ति। आदर्शचरितचित्रणानुरक्तः स मर्यादापुरुषोत्तमरामस्य कथावृत्तमुपादाय मानवजीवनसञ्जीवनसमर्थस्नेहदयाकरुणामैत्रीप्रजावत्सलतागुरुभक्तिपातिव्रत्यैकपत्नीव्रतातिथिसत्कृतिभ्रातृप्रेमप्रभृतिगुणानां कमनीयतया निबन्धनं कृतवान् सहृदयजनेभ्यश्च तेषामुपादेयत्वं रमणीयतया प्रतिपादितवान्। संस्कृतनाट्यसाहित्यविभूतिमहाकविभवभूतिभावानुभूतिप्रतिरूपं तस्य रूपकत्रयमत्र प्रमाणमिति शम्।

●

CC-0. Sampurnanand University Collection. Digitized by eGangotri

# भाणश्चतुर्भाणी च

**डॉ. वनेश्वरपाठकः**
संस्कृतसदनम्, इर्गूरोड,
पहाड़ी साइड, राँची,
बिहार-प्रदेशः



## १. भाणस्य शास्त्रीयं वैशिष्ट्यम्

दशविधरूपकेषु भाणरूपकं रूपकसाहित्ये स्वं विशिष्टं स्थानमधिकरोति। भाणस्य व्युत्पत्तिमूलकोऽर्थोऽस्ति—'एकमुखेनैव भाण्यन्ते उक्तिमन्तः क्रियन्ते अप्रतिष्ठा अपि पात्रविशेषा यत्रेति भाणः'[1]। भाणस्यापरा व्युत्पत्तिरस्ति—'भण्यन्ते व्योमोक्त्या (आकाशभाषितेन) नायकेन स्वपरवृत्तं प्रकाश्यतेऽत्रेति भाणः'[2]। अर्थाद् रूपकप्रकारेऽस्मिन् भाणे एकेन पात्रेण आकाशभाषितैः स्ववृत्तं परवृत्तं च प्रकाश्यते।

भाणस्य भरतेन (ना.शा. १८।१६०-१६२), धनञ्जयेन (दशरू. ३।४९-५१), विश्वनाथेन (सा.द. ६/२२७-३०) च कृतैर्भाणलक्षणैरिदं विज्ञायते यद् भाणे धूर्तचरितवर्णनं प्रधानम्। अस्मिन्नेक एव लोकव्यवहारकुशलो बुद्धिमान् पुरुषो रङ्गमञ्चे उपस्थाय स्वानुभूतं परानुभूतं वा विषयमाकाशभाषितैरुक्तिप्रत्युक्तिद्वारा नानाविधैश्चेष्टितैः सामाजिकान् प्रति प्रकाशयति। स च पुरुषो विटो[3] भवति। धूर्तविटसम्प्रयोज्यो नानावस्थान्तरात्मको भाण एकाङ्को भवति। तत्र भारती वृत्तिः प्रयुज्यते। अस्मिन् शौर्यसौभाग्यवर्णनैर्वीरशृङ्गारयोरभिव्यञ्जना विधीयते। मनोरञ्जनस्य दृष्ट्याऽस्मिन् दशलास्याङ्गानामुपन्यासस्तथा मुखनिर्बहणसन्ध्योर्योजना क्रियते।

---

१. ना.शा., १८।१०७ अभिनवभारती।

२. उभयत्र (व्युत्पत्तिद्वये) शब्दार्थकाद् भण्धातोर्घञ्प्रत्ययः 'भडि परिभाषणे' इति परिभाषणार्थकाद् भड्धातोर्निष्पन्नः 'भण्डः' भाणस्य मूलमिति केचन वदन्ति। परिभाषणम् = परिहासः सोपालम्भः।

३. 'भाणे विटः' अपरपृष्ठे द्रष्टव्यः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

भाणे रसविधानस्य सम्बन्धे भरतेन किमपि नोक्तम्; किन्तु धनञ्जयस्य तट्टीकाकारस्य धनिकस्य तथा विश्वनाथस्य मतानुसारं भाणे भारतीवृत्तेः प्रयोगः, मुखनिर्वहणसन्ध्योर्योजना, दशलास्याङ्गानामुपयोगस्तथा वीरशृङ्गारयोः सूचनेति वस्तुचतुष्टयमपेक्षितमस्ति। यथोक्तं तैः—'सूचयेद् वीरशृङ्गारौ शौर्यसौभाग्यवर्णनैः' इत्यादि।

अत्रेदं विचार्यते—भाणे वीरशृङ्गारयोः सूचना न सङ्घटते, तयोरुत्तमप्रकृतिकत्वात्। उत्तमप्रकृतिके नायक एव तयोर्वर्णनं क्रियते। भाणे तूत्तमप्रकृतेरभावः। तत्र शृङ्गारस्य कथञ्चित् स्वीकृतावपि वीरस्य तु तत्रावसर एव नास्ति। अत एव भाणरचनाया मौलिकविशेषताया अनुपयुक्तत्वात् तत्र वीरस्य प्रयोगः परिहृतः प्राचीनैर्भाणकारैः। भरतेन तु भाणे रसविधानस्य विषये स्पष्टतः किमपि नोक्तम्।

भाणे शृङ्गारस्यापि प्रयोगः शारदातनयस्य नाभिमतः। स तु तत्र शृङ्गाराभासं मन्यते। उक्तं च तेन—'शृङ्गाराभास एव स्यान्न शृङ्गारः कदाचन'[१]। भाणे साधारणस्त्रिया नायिकात्वाद् विटादीनाञ्च नायकत्वात् तत्र शृङ्गारस्य प्रयोगो नोचितः, प्रकतिविरुद्धत्वादिति तस्य मतम्। धनञ्जयेन तदनुसारिणा विश्वनाथेनापि 'सूचयेद् वीरशृङ्गारौ' इति वदता भाणे रसस्य सूचनीयत्वं स्वीक्रियते। तयोर्मते शौर्यसौभाग्ययोर्वर्णनमात्रेण रसनिष्पत्तिर्जायते। शारदातनयोऽपि 'चतुर्विधाभिनये यदि दृश्यो रसो भवति' इत्यादि भाषमाणो भाणे रसस्य सूचनीयत्वमेव समर्थयति[२]।

भाणः कैशिकीवृत्तिहीनो भवति—'कैशिकीवृत्तिहीनानि रूपाण्येतानि कारयेत्' (ना.शा. १८।८९) इत्यादिब्रुवता भरतेन कैशिकीवृत्तिहीनत्वाद् भाणे शृङ्गारोऽपि न सम्भवतीति सूचितप्रायम्, 'शृङ्गारे कैशिकीवृत्तिरिति' सिद्धान्तात्। अत एव भाणे 'प्रायेण भारती क्वापि कैशिक्यपि वृत्तिर्भवतीति विश्वनाथाभिमतं भरतविरोधान्न समीचीनम्।

एवमेव 'भाणानां रञ्जकरसप्रधानत्वम्, तेभ्यो लोकपरिदृष्टस्य रञ्जनावैचित्र्यस्य निष्पत्तेः' इत्यादिब्रुवतोऽभिनवगुप्तस्य मतम्[३], भाणे शृङ्गाराभास एव स्यान्न तु शृङ्गारः' इति शारदातनयमतञ्चापि नात्र स्वीकरणीयं प्रतिभाति। भाणे विटःवेटतीति विटः। 'विट् शब्दे' इति विट्धातोः कप्रत्ययेन निष्पन्नो विटशब्दो 'वेश्यापतिर्भुजङ्गः स्याद् विटः पल्लवकः स्मृतः' इति हलायुधकोशात् पल्लवक-

---

१. भावप्रकाशनम्, ४।१४२; २. तदेव-४।२२।

३. ना.शा., १८।११०, १९।१२०, अभिनवभारती। अत्राभिनवगुप्तेन कृता भाणानां रसस्य रञ्जकरसेति नवीना संज्ञापि विचारणीयाऽस्ति।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

भुजङ्ग-वेश्यापति-कामुक-विदग्ध-नागर-षट्प्रज्ञ-कामकेलिकामुकानुचर-धूर्तकाम-तन्त्रकलाकोविदेत्यर्थानां वाचकः। भागवतानुसारं विटः प्रियवार्ताकरो भवति— 'सतामयं सारभृतां निसर्गो यदर्थवाणी श्रुतिचेतसामपि। प्रतिक्षणं नाट्यवदच्युतस्य स्त्रिया विटानामिव साधुवार्त्ताः'।। विटः कामोपचारकुशलो दक्षिणश्च भवतीति भरतः[1], विटः केवलं हास्यशृङ्गारात्मकरूपकेष्वेव प्रयुज्यते इत्यभिनवगुप्तः[2], विटो वेशोपचारकुशलो मधुरो दक्षिणः कविरिति शारदातनयः, धनञ्जयविश्वनाथौ विटं निपुणं पण्डितं च मन्येते। वेशोपासकस्य कामसहायस्य विटस्य सम्यक् परिचयो विकाराश्च मृच्छकटिकनाम्नि प्रकरणे दृष्टिमायान्ति।

**भाणस्य भाषा**

भाणे भारतीवृत्तेः प्रयोगात् तत्र विटः संस्कृतभाषामेव प्रयुङ्क्ते, न तु प्राकृतम्। मृच्छकटिके चतुर्भाण्यां चासौ तथैव दृश्यते। अन्ये शकारचेटादयः प्राकृतं वदन्ति; किन्तु विटः संस्कृतं वदतीति तस्यानुत्तमपात्रत्वेऽपि वैशिष्ट्यम्। अतः 'विटः प्राकृतवादी च प्रायो बहुविकारवान्'[3] इति शारदातनयविचारो विचारणीयोऽस्ति।

**भाणस्य कथावस्तु**

भरतस्य मते धूर्तविटसम्प्रयोज्ये, विविधाश्रये, बहुचेष्टिते, एकाङ्के च भाणे नानावस्थान्तरात्मको लोकव्यवहारो (वेश्यावृत्तान्तः) निबध्यते। 'हास्योचित-धूर्तादीनामनुप्रवेशेन समानयोगक्षेमो भाणः' इत्यभिनवगुप्तो मनुते। विश्वनाथस्य मते भाणे वृत्तमुत्पाद्यं भवति।

## २. भाणरचनायाः प्राचीनत्वम्

संस्कृतसाहित्ये प्राचीनताया दृष्ट्या भाणस्य स्थानं नाटकमिव महत्त्वपूर्ण-मस्ति। भाणस्य स्वरूपं निरूपयन् भरतो भाणरचनायाः प्राचीनत्वं पारम्परिकत्वं च सूचयति—'भाणस्यापि हि निखिलं लक्षणमुक्तं तथा प्रमाणानुगतम्'[4]।

---

१. भरतस्य मतानुसारं विटः शास्त्रवित्, शिल्पसम्पन्नः, रूपवान्, प्रियदर्शनः, प्रियभाषी, अविकत्थनः, चतुरः, कामोपचारकुशलः, दक्षिणः, देशकालवित्, स्त्रीलुब्ध इत्येवमादिरूपस्त्रयस्त्रिंशद्गुणसम्पन्नः प्रतिष्ठितो नागरिकः प्रतिभाति।

२. अभिनवभारती, प्रथमखण्डम्, पृ. ३२।

३. भावप्रकाशनम्, पृ. ९४,२६७-६९।

४. ना.शा., १८।१६०-१६३।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**३. त्रिवर्गसाधनता**

रूपकाणां क्रमनिर्धारणे भरतस्याभिप्रायं प्रकटीकुर्वताऽभिनवगुप्तेन प्रोक्तम्—'रूपकाणां क्रमनिर्धारणमिदमङ्कसंख्यादृष्ट्या त्रिवर्गोपायत्वप्राधान्यापेक्षया भरतेन कृतम्। नाटकं प्रकरणं नाटिकां च विहाय रूपकाणामन्येषां त्रिवर्गोपायत्वं नास्ति, तेषामेकाङ्कत्वात्'[१]। नाट्यशास्त्रकारेण रूपकाणां भेदान् निरूपयता भाणो रूपकेषु पञ्चमस्थाने स्थापितोऽस्ति'[२]।

दशरूपककारेण धनञ्जयेन भाणस्य तृतीयं स्थानं निर्दिष्टमस्ति[३]। साहित्यदर्पणकारो विश्वनाथोऽप्यत्र धनञ्जयमेवानुसरति[४]। डिमश्चतुरङ्कोऽपि सर्वैर्यत्र कुत्रचित् क्रमे स्थापितोऽस्ति। वस्तुतस्तु नाटकं तथा प्रकरणं विहायापरेषु रूपकेषु क्रमनिर्धारणे किमपि वैशिष्ट्यं नास्ति। अतोऽत्राभिनवगुप्तस्य विचारेऽस्मिन् किमपि तर्कसम्मतं तत्त्वं नावलोक्यते।

**४. चतुर्भाणी** (संक्षिप्तः परिचयः)

प्राचीनकाले रचिता भाणाः केरलात् (केरलातः) समुपलब्धा सन्ति। तेषां प्रकाशनं चतुर्भाणीति नाम्ना १९२२ शतके शिवपुरीतः (मद्रासतः) सञ्जातम्[५]। अस्याश्चतुर्भाण्या भाषाशैली भावसरणिश्च प्राधान्येनास्याः प्राचीनतायाः परिचायिके स्तः।

चतुर्भाण्यां पद्मप्राभृतकम्, उभयाभिसारिका, धूर्तविटसंवादः, पादताडितकमिति चतुर्णां भाणानां सङ्ग्रहोऽस्ति। तेषां रचयितारः क्रमशः शूद्रकः, वररुचिः, ईश्वरदत्तः, श्यामिलकश्चेति चत्वारः सन्ति। चतुर्भाण्यां सङ्गृहीतानां भाणानां रचयितॄणां सम्बन्धे एकः प्राचीनतमः श्लोकः प्रचलितोऽस्ति—

'वररुचिरीश्वरदत्तः श्यामिलकः शूद्रकश्च चत्वारः ।
एते भाणान् बभणुः का शक्तिः कालिदासस्य' ।।

तेषां चतुर्णां क्रमानुसारमियं स्थितिः—शूद्रकः, वररुचिः, ईश्वरदत्तः, श्यामिलकः। तत्र पद्मप्राभृतकस्य कर्ता शूद्रकः, उभयाभिसारिकाया रचयिता वररुचिः, धूर्त्तविटसंवादस्य निर्माता ईश्वरदत्तस्तथा पादताडितकस्य प्रणेता श्यामिलकोऽस्ति;

---

१. ना.शा , १८।६२, अभिनवभारती; २. तत्रैव-१८।२०३।
३. दशरू.-१।८; ४. सा.द., परि.६।
५. चतुर्भाणी 'शृङ्गारहाट' इति नाम्ना श्रीमोतीचन्द्रेणानूदिता, हिन्दीग्रन्थरत्नाकरकार्यालय'-प्राइवेट-लिमिटेड, बम्बईतः १९६० शतके प्रकाशिताऽभवत्।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

किन्तु भाणानामेषां कर्तृणां विषये ऐतिहासिकानां प्रमाणं दुर्बलमस्ति। सर्वेषां भाणानां समाप्तिवाक्यैरेव तेषां रचयितॄणां सम्बन्धे स्वल्पः परिचयः प्राप्यते।

### (क) पद्मप्राभृतकम्

अस्य रचयिता शूद्रक इति प्रायोवादः। तस्य कर्तृत्वेऽकर्तृत्वविरोधे वा किमपि प्रमाणं नोपलभ्यते। स राजा एवं रूपककार आसीत्। बाणभट्टस्य कादम्बर्यां शूद्रक उज्जयिन्या नृपतित्वेन वर्णितोऽस्ति। ऐतिहासिकः पुरुषः स ख्रीस्तपूर्वतृतीयशतके वर्त्तमान आसीत्। विवादे सत्यपि शूद्रको मृच्छकटिकं नाम प्रकरणस्य प्रणेतेति पारम्परिकं तथ्यम्। शूद्रकस्य साहित्यिककृतीनां वर्णनं राभिल-सोमिल(सौमिल्ल)[1] कर्तृकत्वेनापि विद्यते।

अस्मिन् भाणे कर्णीपुत्रस्य मूलदेवस्य नायकत्वेन स्थितस्य तन्मित्रस्य शशेति नाम्नो विटस्य, तस्य प्रथमप्रेयस्यविपुलायास्ततश्च देवसेनाया वृत्तान्तो मनोरमत्वेन वर्णितोऽस्ति। प्राचीनकाले कामकेलिविदो मूलदेवस्य महती ख्यातिरासीत्। कादम्बर्यां विन्ध्याटवीवर्णने बाणेनापि मूलदेवस्य तत्सखस्य शशस्य चोल्लेखः कृतोऽस्ति—'कर्णीसुतेनेव सन्निहितविपुलाचला शशोपगता च'। अस्मिन् भाणेऽपि कर्णीपुत्रस्य प्रथमप्रेयस्या विपुलया सह प्रेमप्रसङ्गे शशस्य समावेशः कृतोऽस्ति। प्राचीनकाले मूलदेवः कामतन्त्रस्य विशेषतो वेशिकतन्त्रस्य मुख्यपात्रमासीत्। क्षेमेन्द्रेणापि कलाविलासे तस्योल्लेखः कृतोऽस्ति। शुकसप्तत्याः कथास्वपि वेशिकविषयेषु तस्य प्रामुख्येन वर्णनमस्ति।

भाणेऽस्मिन् मूलदेवेन कर्णीसुतेन देवसेनाया मनोवृत्तिं विज्ञातुं प्रेषितो विटः सर्वप्रथममुज्जयिन्याः परिभ्रमणं करोति। अस्मिन् प्रसङ्गेऽसौ प्रच्छन्नपुंश्चलिकै-र्वेश्यालम्पटकैर्मनोरञ्जकैः पुरुषैः सह काल्पनिकं वार्तालापं कुर्वन् देवसेनासदन-मासीदति। ततस्तस्या मनोवृत्तिं विज्ञाय तथा तस्याः प्रेमपरिचयरूपं पद्मोपहारमादाय कर्णीपुत्रमुपैति। इत्थं पद्मोपहारमाधृत्य भाणस्यास्यान्वर्थकं नाम पद्मप्राभृतकमिति।

अस्मिन् भाणे समाजे पाण्डित्येन धार्मिकत्वेन च प्रसिद्धानां पुरुषाणां प्रच्छन्नकामुकत्वस्य वेश्यालम्पटत्वस्य च वर्णनं कृत्वा कविर्जनसाधारणानां मनसि तान् प्रति विकर्षणमुत्पादयति। भाणोऽयं तदानीं लोके विख्यातानां कतिपयपुरुषाणां सूचनामपि ददाति।

---

१. 'तत्र प्रथितयशसां भास-सौमिल्ल-कविपुत्रादीनाम्.....'इत्यादि, मालविकाग्निमित्रस्य प्रस्नावनायां कालिदासः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

## (ख) उभयाभिसारिका

भाणोऽयं वररुचेः कृतिः। स च कण्ठाभरणकाव्यस्य रचयितेति महाभाष्यकारः पतञ्जलिः। वररुचेरपरा कृतिश्चारुमतीति प्रसिद्धिः। अवन्तिसुन्दरीकथानुसारं तस्य जन्मस्थानं गोदावर्यास्तटप्रदेशभूमिः। अयं वार्तिककारात् कात्यायनादभिन्नः। अस्य समयः ख्रीस्तपूर्वकतृतीयशतकम्। अस्मिन् भाणे नान्द्यन्ते प्रविष्टस्य सूत्रधारस्य सर्वमारम्भवाक्यं भासस्य स्वप्नवासवदत्तनामनाटकस्यारम्भवाक्यान्यनुसरति। अत इदं सुस्पष्टं यद् भाणस्यास्य रचयिता भासस्य पश्चाद्वर्त्तीति।

भाणेऽस्मिन् लोध्रवृक्षेण सहोपमितो विटः स्वप्रेयस्या नारायणदत्तया सह केनापि कारणेन सञ्जातकलहाभिनिवेशेन सागरदत्तश्रेष्ठिपुत्रेण कुबेरदत्तेनानुरुद्धो द्वयोरेकत्राभिसरणे साहाय्यं करोति। तस्य प्रयत्नेन द्वयोः प्रेमिजनयोरन्योन्यं प्रत्यभिसरणादयं भाण उभयाभिसारिकेत्यन्वर्थकं नाम बिभर्त्ति।

## (ग) धूर्त-विट-संवादः

ईश्वरदत्तकवेः कृतिरयं भाणो वसन्तर्तुवर्णनेन प्रारभते। भोजकृते शृङ्गारप्रकाशे भाणस्यास्योल्लेखात्, हेमचन्द्रस्य काव्यानुशासनेऽस्य श्लोकस्यैकस्योद्धृतत्वाच्च कवेरीश्वरदत्तस्यैकादशशतकात् पूर्ववर्त्तित्वमनुमीयते। ईश्वरदत्तो मगधवासीति प्रसिद्धिः।

भाणस्यारम्भे प्रविष्टेन सूत्रधारेण वर्णिताद् विटस्वरूपादिदं विदितं भवति यत् तदानीं वृद्धा नीलीलेपात् स्वं जर्जरत्वं प्रच्छादयन्ति स्म। पद्मप्राभृतकेऽपि विट एवं वर्णितोऽस्ति। अस्मिन् भाणे विटो धूर्तसभाभिर्वेशवाटैश्च परिपूर्णस्य पृथिव्यां प्रख्यातकीर्तेः कुसुमपुरस्य परिभ्रमणं कुर्वन् वेशात् प्रतिनिवृत्तेन श्रेष्ठिपुत्रेण कृतिपालकेन सह वार्तालापं करोति। कृतिपालकोऽनवरतसुखतृष्णां कामिनीं परित्याजयन्तं पितरं प्रति क्रुद्धो ब्रूते—"पिता नाम खलु स यौवनस्य पुरुषस्य मूर्तिमान् शिरोरोगः।.......अत्र मे गृहीतपरशोः क्षत्रियवधोद्यतस्य जामदग्न्यस्येव लोकमपैतृकं कर्तुं मतिर्जायते, अन्यच्च कष्टं भावाय निवेदयामि। तातः किल मां दारकर्मणि नियुङ्क्ते मम त्वेष निर्णयः—कर्तव्यं खलु नैव भोः कुलवधूकारां प्रवेष्टुं मनः"। विटः–'यद्येष भवतो निर्णयः प्रीताः स्मः' इति तमुक्त्वा परित्यज्य च तं वेशं प्रविशति। तत्र गोष्ठ्यां विश्वलकेन धूर्तेन कामतन्त्रविषयान् कांश्चित् संशयान् पृष्टोऽसौ यथाशक्ति तेषां समाधानं करोति। धूर्तविटयोर्मध्ये प्रचलितं कामतन्त्रविषयं प्रश्नोत्तरमतीवमनोरञ्जकमस्ति। तयोः पारस्परिकं संवादमाधृत्य भाणोऽयं धूर्तविटसंवादेति नाम्ना ख्यातोऽस्ति। काल्पनिकेऽस्मिन् धूर्तविटसंवादे शास्त्रदृष्ट्या लोकदृष्ट्या च त्याज्यत्वेन हितकरमपि वस्तु सम्मुखमायाति।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

## (घ) पादताडितकम्

कविवरश्यामिलकेन विरचितः पादताडितकं नाम भाणो भाणसाहित्ये श्लाघ्यत्वेन स्थितः। अयं भाणः श्यामिलकस्य कवेः कृतिरिति सूत्रधारवचसाऽभिज्ञायते—'एवमार्यमिश्रान् प्रणिपत्य विज्ञापयामि यद् वयमार्यश्यामिलकस्य कृतिं पादताडितकं नाम भाणं प्रयोक्तुं व्यवसिता इति'। कर्तुरेतादृशः परिचयः पूर्वोक्तेषु त्रिषु भाणेषु नैव दृश्यते। अस्य भाणस्याभिनयोऽप्युज्जयिन्यां जातो यत्र स्वयं श्यामिलकोऽप्येकं पात्रमासीदित्यपि सूत्रधारोक्त्या ज्ञायते—'धूर्तचाक्रिकः खलतिः श्यामिलको घण्टामादाय घोषयति' इति। श्यामिलकः चाक्रिकः (चक्रिकस्य घण्टया उद्घोषकः) खल्वाटशिराश्चासीदित्यपि सूत्रधारस्य वचनेनानेन परिज्ञातं भवति। अस्य भाणस्यारम्भो भाणशैलीं सर्वांशत्वेनानुसरति।

ग्रन्थस्य समाप्तिवाक्येनेदमपि ज्ञायते यत् कविवरोऽयमुदीच्यस्तथा विश्वेश्वरदत्तस्य पुत्र आसीत्। उदीच्यत्वेन कविरयं कश्मीरनिवासीति विदुषां मतम्। क्षेमेन्द्रेण औचित्यविचारचर्चायामस्य पद्यमुद्धृतमस्ति। अभिनवगुप्तेनास्य नामनिर्देशः कृतोऽस्ति। तेन ग्रन्थस्यास्योद्धरणान्यपि गृहीतानि सन्ति। अयं महिमभट्टस्य गुरोः श्यामिलकादभिन्न इति ख्यातिः। अतः श्यामिलको नवमशतकात् पूर्वं विद्यमान आसीदिति सम्भाव्यते।

अस्मिन् भाणे विटो दद्रुणमाधवात्—"सुराष्ट्राणां वारमुख्यया मदनसेनिकया तत्र भवांस्तौण्डिककोकिर्विष्णुनागश्चरणतलेन शिरस्यनुगृहीतः, तस्या वेशदेवतायास्तं सम्भावनाविशेषमवमानं तथा तेनात्मानमशुचिं मन्यमानः प्रायश्चित्तं कर्तुं ब्राह्मणपीठिकां गतः। ततश्च धर्मशास्त्रिभिः 'विटजातिं सन्निपात्य विटमुखेभ्यः प्रायश्चित्तं मृग्यताम्' इति निर्दिष्टो विटसन्निपातं प्रति प्रस्थितः" इति विज्ञाय जम्बूद्वीपतिलकभूतस्य सार्वभौमनरेन्द्राधिष्ठितस्य सार्वभौमनगरस्य[१] परिभ्रमणं करोति। अस्मिन् परिभ्रमणेऽसौ विटमहत्तरस्य भट्टिजीमूतस्य वेशमहापथोपस्थितं समन्तात् सन्निपातितविटजनसङ्कुलं विटसमाजभवनं प्रविशति। तत्रोपस्थितेभ्यः

---

१. सार्वभौमनगरमिदं कुसुमपुरमथवोज्जयिनीति सन्दिग्धो विषयः। सार्वभौमनरेन्द्रशब्दोऽत्र कुसुमपुरपुरन्दरं महेन्द्रादित्यं चन्द्रगुप्तविक्रमादित्यं सूचयति। सार्वभौमनगरेऽस्मिन् शक-यवन-तुषार-पारसीक-मगध-कलिङ्ग-वङ्ग-महिषक-चोल-पाण्ड्य-केरल-प्रभृतिदेशानां निवासिनो वसन्ति स्म। 'अवन्ति-सुराष्ट्रापरान्त विजयानन्तरं विक्रमादित्य उज्जयिन्यां द्वितीयां राजधानीमस्थापयत्' इति केषाञ्चन मतम्। इतः पूर्वं शकाः क्षत्रपवंश्या उज्जयिन्याः शासका आसन्। रघुवंशेऽपि अपरान्तविजयस्योल्लेखोऽस्ति रघोर्दिग्विजये। पादताडितकस्य सर्वं विवरणमेतदस्य रचनां गुप्तकालिकीं सूचयति।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

सर्वेभ्यो विटेभ्योऽसौ तौण्डिककोकेर्विष्णुनागस्य प्रायश्चित्तार्थं निवेदयति। ततो विटमहत्तरो भट्टिजीमूतोऽन्येषां प्रायश्चित्तविधानं प्रतिषेध्यापरं प्रायश्चित्तं निर्दिशति— 'कापि सुन्दरी स्वकिसलयकोमलकरेणास्य केशस्य प्रसाधनं न करोतु। अयमपि तथैव रुक्षकेशान् धारयंस्तिष्ठतु''। अपि च मदनसेनिकायाः प्रायश्चित्तं श्रूयताम्— 'सा सालक्तकेन सनूपुरेण च चरणेन मे शिरोऽनुगृह्णातु। अयञ्च तयाऽनुगृह्यमाणं मां पश्यत्विति'। सर्वे विटा विटमहत्तरस्य भट्टिजीमूतस्य प्रायश्चित्तविधानमिदं ससाधुवादं प्रशंसन्ति।

इत्थं मदनसेनिकायाः पादताडितेनारब्धो विटमहत्तरेण भट्टिना काम्यमानेन तस्याः पादताडितेन च समाप्तिं गतोऽयं भाणोऽन्वर्थनामास्ति।

**(५) भाणस्य शास्त्रीयवैशिष्ट्यस्यालोके चतुर्भाण्याः समीक्षणम्**

**विटः**—चतुर्भाण्यां विटः केन्द्रीयपुरुषोऽस्ति; किन्त्वयं विटोऽन्यभाणानां विटा इव निष्कर्मा, अयोग्यः, अनुत्तमकोटिकः, शृङ्गारी पुरुषो नास्ति। नापि विटोऽयं व्यक्तित्वस्य चारित्र्यस्य च दृष्ट्या गम्भीरनाटकेषूपेक्षितोऽस्ति। प्राचीनभाणेषु विटः शृङ्गारी, कामतन्त्रकुशलः, काव्यकलानिपुणस्तथा पूर्णगौरवेण सह प्रभावशाली पुरुषोऽस्ति। भरतस्य मतानुसारं भाणो धूर्तविटसम्प्रयोज्योऽस्ति तथा विटस्तत्र नायकत्वस्य महिमानं न लभते। भाणेषु तस्य तथैव चित्रणमस्ति; किन्त्वेतत् सत्यं यद् भाणेषु केवलो विट एव रङ्गमञ्चे सर्वत्रोपस्थितो भवति, तथा नायकत्वं तत्र सुतरां गच्छति। चतुर्भाण्यां विटो भरतस्य मतानुसारं चतुरः, प्रियभाषी, कामोपचारकुशलः, दक्षिणः, प्रतिष्ठितो नागरिकः; धनञ्जयविश्वनाथयोर्मतानुसारं निपुणः, पण्डितः, शारदातनयस्य मतानुसारं कामोपचारकुशलः, मधुरः, दक्षिणः कविर्वर्त्तते। स विटस्य वैशिष्ट्येन विशिष्टः प्रभाववान् पुरुषोऽस्ति।

चतुर्भाण्यां शूद्रकस्य शक्तिशालिन्या लेखन्याः प्रसूतिः पद्मप्राभृतकं सर्वोत्कृष्टत्वेन वर्त्तते। तत्र समाजे लब्धस्थानानां कवीनाम्, वैयाकरणपण्डितानाम्, धार्मिकाणाम्, परिव्राजकानाञ्च प्रच्छन्नकामुकत्वमुद्घाट्य शूद्रकेण मृच्छकटिके इवात्रापि समाजस्य बहूपकृतम्। अत्र विटस्य वैदग्ध्यं दर्शनीयमस्ति।

**भाषा-प्रयोगः**

'भाणेषु भारतीवृत्तिरुपयुज्यते' इति नियमाच्चतुर्भाण्यां सर्वत्र संस्कृतस्य प्रयोगः। केवलं पादताडितके भद्रायुधस्य यशोवर्णनप्रसङ्गे दाशेरकस्योक्तौ वारद्वयं प्राकृतस्य प्रयोगो दृश्यते। चतुर्भाण्यां समेषां पात्राणां भाषाऽतीवप्रौढा, अत्यन्तपरिष्कृता, सुव्यवस्थिता च विद्यते। यद्यपि भाणेषु ग्राम्याऽश्लीलभाषाया

CC-0. Sampurnanand University Collection. Digitized by eGangotri

निन्दनीयवार्तालापस्य चाधिक्यं सहजतया मुखरमस्ति, तथापि चतुर्भाण्यां सर्वत्र संयमो दृश्यते। चतुर्भाण्या भाषा सुबन्धोर्बाणभट्टस्य च प्रभावपूर्णां गद्यशैली-मनुहरति। चतुर्भाण्यां भाषायाः सरलत्वेऽपि तत्र गूढव्यञ्जनायाः प्राचुर्यं दर्शनीयमस्ति।

**छन्दोयोजना**

छन्दसां विविधतया तथा तेषां समुचितयोजनया काव्यसौष्ठवं विवर्द्धते। चतुर्भाण्यां छन्दसां वैविध्येन तेषां समुचितयोजनया च भाषाऽतीवप्रौढा विद्यते। अपरिचितानां प्राक्तनानां सुपरिचितानामर्वाचीनानाञ्च छन्दसां सुन्दरः प्रयोगश्चतुर्भाण्या भाणानां निर्मातॄणां छन्दोविधाननैपुण्यं निदर्शयति।

**चतुर्भाण्याः कार्यक्षेत्रम्**

चतुर्भाण्यां सङ्गृहीतानां भाणानां कार्यक्षेत्रमुज्जयिनी अथवा कुसुमपुरं विद्यते। उभयाभिसारिकाया धूर्तविटसंवादस्य च कार्यक्षेत्रं कुसुमपुरमस्ति। पद्मप्राभृतकस्य पादताडितकस्य च कार्यस्थानमुज्जयिनी वर्त्तते; किन्तु पादताडितक-कारेण सार्वभौमनगरेति स्तानाम्ना निर्दिष्टस्य नगरस्य वास्तविकं नाम स्पष्टं नास्ति। यद्यप्यत्र विटो नगरवीथ्यां परिभ्रमति तथा काल्पनिकैः पुरुषैः सह वार्तालापं करोति; किन्तु ते नगरवासिनो जना इव न प्रतीयन्ते। अतः पादताडितकस्य स्थानं सन्दिग्धमस्ति। 'सार्वभौमनगरमिदं सार्वभौमनरेन्द्रस्य चन्द्रगुप्तविक्रमादित्यस्य द्वितीया राजधानी उज्जायिनीति सम्भाव्यते' इति केषाञ्चन मतम्। वयं तु कालिदासस्याश्रयदातुर्यशोधर्मन्‌शकारिविक्रमादित्यस्य (ख्रीस्तपूर्वप्रथमशतके स्थितस्य) एव द्वितीयां राजधानीमुज्जयिनीं मन्यामहे।

**निष्कर्षः**

लोकानुरञ्जनं भाणस्य प्रमुखमुद्देश्यमस्ति। रञ्जनावैचित्र्यायैव भाणे रसनिबन्धनं क्रियते, यस्याभिधानमभिनवगुप्तेन रञ्जकरसेति विहितमस्ति। भाणस्योपयोगितां निर्दिशता नाट्यदर्पणकारेणोक्तम्—'अत्र विटादीनां परप्रवञ्चनात्मकं वृत्तं प्रेक्षकाणामवञ्चनीयतापादनार्थं व्युत्पाद्यते' इति। अर्थाद् भाणे विटादीनां चरित्रचित्रणस्योद्देश्यमस्ति धूर्तजनप्रवञ्चनातः सामाजिकानां मनसि सतर्कताधानम्, येन सामाजिका धूर्तैः प्रवञ्चिता न भवेयुरिति।

भाणेष्वनेकत्र वैयाकरणानां पौराणिकानां ज्यौतिर्विदां भागवतानां धार्मिकाणां दार्शनिकानाञ्चोपहासः कृतोऽस्ति। चतुर्भाण्या अनुशीलनेनेदं सुस्पष्टं भवति यत्

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तस्या रचनाया उद्देश्यमस्ति—तदानीन्तनसमाजे महत्सु स्थानेषु स्थितानामपि जनानां प्रच्छन्नकामुकताया वेश्यालम्पटतायाश्च प्रदर्शनं कृत्वा तेषामुपहासः क्रियते। परवर्त्तिषु भाणेषु एतदर्थमेव शृङ्गारस्याश्लीलतायाश्च प्राचुर्यं दृश्यते; परन्तु चतुर्भाण्यामत्र संयमः। चतुर्भाण्यामप्यनेकत्राश्लीलताऽऽलोक्यते; परन्तु विटानामाकाशभाषितपात्राणां च संवादशैली एतादृशी मनोहारिणी तथा सव्यङ्ग्याऽस्ति, यस्याः साम्यं संस्कृतसाहित्येऽपरत्र दृष्टिं नैति। चतुर्भाण्यां यत्र तत्र निर्दिष्टा ऐतिहासिकपुरुषाः, ऐतिहासिकघटनाः, वैदेशिकानां सम्पर्कः, भौगोलिकस्थानानामुल्लेखाश्च ऐतिहासिकदृष्ट्या महते उपयोगाय सन्ति।

भाषायाः सौष्ठवात् परिष्कृतशैल्यां सरसभावानां प्रभावात्मकाभिव्यक्तेश्च रूपकविधाया भाणस्य श्लाघनीयनिदर्शनानां चतुर्भाण्या भाणानां साहित्ये महत्त्वमक्षुण्णमस्ति। चतुर्भाण्यां सङ्गृहीता भाणा रूपकविधाया एकस्या विशिष्टरचनायाः प्राचीनतमानि निदर्शनानि सन्ति तथा साहित्यस्य वास्तविकगुणेन विशिष्टशैल्या च सम्पन्नाः सन्ति। अत एव ते संस्कृतसाहित्ये स्वं श्लाघनीयं स्थानमधिकुर्वन्ति। भाणानामेकमपरं वैशिष्ट्यमिदमस्ति यत् ते कामतन्त्रस्य विविधसिद्धान्तान् प्रतिपादयन्तः कामुकानां ज्ञानवर्द्धनायोपयोगिनः सन्ति।

चतुर्भाण्यां जीवनस्याधिक्यम्, तेषां कलात्मकं प्रतिपादनम्, प्रौढभाषायाः प्रयोग इत्येवमादयो विशेषाः सन्ति ये परवर्त्तिषु भाणेषु न दृश्यन्ते। परवर्त्तिनो भाणा जीवनहीनकलाया निदर्शनानि सन्ति। विषयवैविध्याभावः, विषयस्य भावस्य रसस्य घटनानां चरित्राणां शैल्याश्चैकरूपता तेषु दृश्यते। परवर्तिभाणेषु रूढिगतविवरणानां सर्वांशतः साम्येन तत्र पाठकानां मनो न रमते। अत एव समाजे भाणा लोकप्रियतां नाभजन्।

नाटकस्य यत्प्रयोजनं तद् भाणप्रहसनाद्यैरेकाङ्कैः रूपकैः पूर्णतां नैति। अत्र केवलं रञ्जनावैचित्र्यमेव (मनोरञ्जनमेव) प्रधानम्। अतो भाणप्रहसनादिरूपकाणि विशिष्टसमाजस्योपयोगाय न सम्पद्यन्ते। अनुत्तमप्रकृतिकत्वमप्येषां ह्रासस्य कारणमिति।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

# आनन्दस्वरूपविमर्शः[1]

**डॉ. मनुलताशर्मा**
संस्कृतविभागाध्यक्षा,
आर्यमहिलामहाविद्यालये
वाराणसी



भारतीयवाङ्मये आनन्दशब्दस्य प्रयोगोऽतीवोदात्तो व्यापकरूपतया विविधेऽर्थे च वर्तते। शब्देऽस्मिन् प्रेयसः समारभ्य श्रेयःपर्यन्तम्, अभ्युदयान्निःश्रेयसपर्यन्तं, सांसारिकसुखोपभोगाद् ब्रह्मात्मैक्यपर्यन्तं, कलानिर्मितेः कलानुभूतिपर्यन्तं तथाऽऽत्मोपलब्धितः प्रमातुरानन्दानुभूतिं यावत् सर्वे भावाः सहजतया समाविष्टाः सन्ति। ब्रह्मणः स्वरूपाभिव्यक्तिमारभ्य नितान्तलौकिकाह्लादानुभूतिपर्यन्तं यः कश्चनानन्दः समनुभूयतेऽस्माभिः सांसारिकैर्यश्च लौकिकालौकिकादिविविधैर्विशेषणैर्विशिष्यते तद्विषये समुदेति काचनानन्ददायिनी जिज्ञासा हृदि सर्वेषां सहृदयानामतस्तस्य स्वरूपादिविमर्शपरा काचन चर्चाऽत्र प्रस्तूयते।

**आनन्दशब्दस्य व्युत्पत्तिः पर्यायवाचिनश्च**

'आनन्दशब्दः' आङुपसर्गपूर्वकसमृद्ध्यर्थकटुनदिधातोर्घञि प्रत्यये कृते निष्पद्यते। इत्थम् 'आ समन्तान्नन्दति नन्दयति वा समृद्धो भवति समृद्धं करोतीति वा आनन्दः' इत्यर्थो भवति।

अत्रायमभिसन्धिः—'यः सर्वतोभावेन समृद्धः सन् समृद्धञ्च कुर्वन्, सर्वविषयकाभावबोधविगलनञ्च करोति, अन्यवस्तुविषयकज्ञानञ्च निरुणद्धि, स एवानन्दः। वस्तुतो यावदिष्टवस्तुप्राप्तिर्न भवति, तावदभावः प्रतीयते, चित्तचाञ्चल्याद् दुःखमनुभूयते च। अत ईप्सितप्राप्तौ चित्तस्थैर्याद् दुःखनिवृत्तिपूर्वकपूर्णतारूपसमृद्धिरेवाऽऽनन्दपदस्यार्थः। कोशेष्वपि तावत्, यथाऽमरकोषे—

---

१. बेङ्गलूरुनगरे सम्पन्ने दशमे विश्वसंस्कृतसम्मेलने पठितोऽयं निबन्धः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

मुत् प्रीतिः प्रमदो हर्षप्रमोदामोदसम्मदाः ।
स्यादानन्दथुरानन्दशर्मशातसुखानि च ।। इति।

(अमरकोषः, १।४।२४)

द्वादशेष्वर्थेषु निर्दिष्टोऽयमानन्दः। हलायुधे शब्दकल्पद्रुमे वाचस्पत्ये चाप्येतस्योल्लासाह्लादसन्तोषप्रेमस्नेहादररुचिक्षेमकल्याणदुःखादिप्रशमनमनुकूलतादयोऽर्था निर्दिष्टाः सन्ति। यद्यप्येते प्रयोगविधावपरपर्यायाः परं विश्लेषणदृशा विवेचने कृते सत्येषु सूक्ष्मो भेदो वर्तत एव। अनेनैव हेतुना आनन्दपदार्थस्य कोशप्रतिपादितार्थेभ्यः पार्थक्यं दृश्यते। एतत्पार्थक्यं ज्ञातुमेते शब्दा विश्लेषणीयाः सन्ति। एषु मोदप्रमोदामोदप्रमदसम्मदशब्दाः 'मुद् हर्षे' 'मदीहर्षे' 'प्रमदसम्मदौ' हर्षे इति हर्षार्थकधातुभ्यो निष्पन्नाः सन्ति। यद्यप्यामोदशब्दस्य गन्धेऽर्थेऽपि प्रयोगो दृश्यते, 'आमोदो गन्धहर्षयोः' इत्युक्तेः। हर्षशब्दो 'हृष् तुष्टौ' इति धातोर्निष्पन्नः। अतो हर्षशब्दो विचार्यते—

यदिन्द्रियाणि हृष्यन्ति हर्षयन्ति परानपि ।
तस्माद्धर्ष इति ज्ञेयः प्रसादो मनसो हि सः[१] ।।

अयमाशयः—हर्षश्चित्तप्रसादः। अस्योद्भव इष्टलाभात्, प्रियसमागमात्, गुरुराजदेवताप्रसादाच्च सम्भवति। यथा प्रोक्तम्—

देवभर्तृगुरुस्वामिप्रसादः प्रियसङ्गमः।
मनोरथाप्तिरप्राप्यमनोहरधनागमः ।।
तथोत्पत्तिश्च पुत्रादेर्विभावो यत्र जायते।
नेत्रवक्त्रप्रसादश्च प्रियोक्तिः पुलकोद्गम।।
अश्रुस्वेदादयश्चानुभावा हर्षं तमादिशेत्[२] ।।

इत्थमेव हिंसार्थक-'शृधातोः' मनिन्-प्रत्यये कृते शर्मन्-शब्दो निष्पद्यते 'शृणाति हिनस्ति दुःखम्' इत्यर्थे। एवमेव तनूकरणार्थकशोधातोर्निष्पन्नः शातशब्दः, 'श्यति दुःखम्' इति प्रयोगदर्शनात्। शोभनं खम्, शोभनानि खानि येनेति सुखम्। आङुपसर्गपूर्वकात् 'ह्लादी सुखे च' इत्यस्माद्धातोर्निष्पन्न

१. साहित्यदर्पणः, शशिकलाव्याख्यायां तृतीयपरिच्छेदे उद्धृतम्, पृ.२२१।
२. रसगङ्गाधरः, प्रथमानने उद्धृतम्, पृ.२९८, तुलनीयम्—नाट्यशास्त्रे सप्तमेऽध्याये ६१-६२ तमकारिकाभ्याम्।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

आह्लादशब्दोऽपि सुखार्थक एव। प्रीतिशब्दश्च 'प्रीञ् तर्पणे' धातोः क्तिन्प्रत्यये कृते 'प्रीणनं तर्पणं प्रीणाति तर्पयति वा प्रीतिः' इत्यर्थं प्रतिपादयति। स्वस्वविशिष्टार्थ-प्रतिपादकानामेषां शब्दानामानन्दशब्देन सह विश्लेषणे कृते ज्ञायते यत् समृद्ध्यर्थके आनन्दे मोदप्रमोदामोदप्रमदसम्मदशर्मशातसुखप्रीतिहर्षाह्लादशब्दवाच्यानां मनः-प्रसादनाभीष्टप्राप्त्यशुभनाशामङ्गलनिवारणमनस्तुष्ट्याद्यर्थानां समावेशो वर्तते। अमरकोषस्य रामाश्रमीटीकायामानन्दस्य पर्यायभूतानामुपर्युक्तशब्दानां परिगणनं विधाय एते द्वादश आनन्दस्येति कृता टिप्पणी प्रकारान्तरेणामुमेवार्थमभिव्यनक्ति[१]। प्रकारान्तरेणाप्येष एवार्थः परिपुष्टो भवति ।

काव्यशास्त्रग्रन्थेषु सञ्चारिभावानां लक्षणप्रसङ्गे हर्षशब्द आनन्दार्थे परिगणितः। तल्लक्षणञ्च तैस्तैराचार्यैरुक्तम्, यथा—"इष्टप्राप्त्यादिजन्मा सुखविशेषो हर्षः,[२] हर्षस्त्विष्टावाप्तेर्मनःप्रसादोऽश्रुगद्गदादिकरः[३], मनःप्रसादो हर्षस्यादिष्टावाप्तिः स्तवादिभिः"[४]। एतैर्लक्षणैः प्रतीयते यद् हर्षस्य सम्बन्ध इन्द्रियतुष्ट्या सहाधिको वर्तते।

विभिन्नानां ग्रन्थानामुद्धरणेनाप्येष विमर्शः परिपुष्टो भवति यदामोदप्रमोद-तृप्तिहर्षानन्दादयो यद्यपि समानार्थकास्तथाप्येषु सूक्ष्मोऽन्तरो वर्तत एव। ऋग्वेदस्य नवममण्डले एकस्मिन् मन्त्रे[५] वर्णितमस्ति—'यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते' इति। आनन्दमुदप्रमुदमोदादीनां पृथक् पृथग् निरूपणेन सुस्पष्टं प्रतीयते यदेते विभिन्नार्थकाः सन्ति। बृहदारण्यकोपनिषदि स्वप्नावस्थावर्णनप्रसङ्गे—'न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान्मुदः प्रमुदः सृजते'[६]। अत्र शङ्कराचार्यो विवृणुते—'आनन्दाः सुखविशेषाः, मुदो हर्षाः पुत्रादिलाभनिमित्ताः, प्रमुदस्त एव प्रकर्षोपेताः, अथ चानन्दादीन् सृजते'[७]।

तैत्तिरीयोपनिषदि 'मोद-प्रमोद-आनन्द-ब्रह्मपुच्छम्'[८] इति प्रतिपादनेन मोद-प्रमोदानन्दादयः पृथक्परिगणिताः, उत्तररामचरितेऽपीदृशमेवोद्धरणं दृश्यते—

---

१. अमरकोषः – १।४।२४-२५।

२. रसगङ्गाधरः, प्रथमाननम्, पृ.२९८।

३. साहित्यदर्पणः – ३।१६५; ४. सरस्वतीकण्ठाभरणम्-५।१५३।

५. ऋग्वेदः – ९।११३।११; ६. बृहदारण्यकोपनिषद्-४।३।१०।

७. बृहदारण्यकोपनिषदि, शाङ्करभाष्ये-४।३।१०।

८. उपनिषत्सङ्ग्रहे, तैत्तिरीयोपनिषदि, समापनांशे-२।९।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

'यत्रानन्दाश्च मोदाश्च यत्र पुण्याश्च सम्पदः'[१]। अत्र वीरराघवष्टीकते—'आनन्द आत्मानुभवजन्यो हर्षः', 'मोदश्च दिव्यविषयानुभवजन्यं सुखम्'[२]।

**आनन्दानुभूतेर्वैशिष्ट्यम्**

शास्त्रगतप्रयोगैः काव्यगतप्रयोगैश्चाऽऽनन्दशब्दस्यार्थगाम्भीर्यं प्रकाशते। उत्तररामचरिते सीतापरित्यागेन व्यथितहृदयस्य रामस्य हृदयोद्गारेऽप्येषां पार्थक्यं लक्ष्यते—'क्व तावानानन्दो निरतिशयविस्रम्भबहुलः, क्व वान्योन्यप्रेम, क्व च नु गहनाः कौतुकरसाः। सुखे वा दुःखे वा क्व नु खलु तदैक्यं हृदययोः, तथाप्येषः प्राणः स्फुरति न तु पापो विरमति'[३]।

पुनः सीतया संस्पृष्टस्य रामस्याभिव्यक्तौ भवभूतिनाऽऽनन्दशब्दस्य प्रयोगो यस्मिन् सन्दर्भे विहितः, स तृप्त्यात्मलयाद्यर्थानां वाचकः। सीतासंस्पर्शजन्यां तामानन्दानुभूतिमभिव्यञ्जयन् रामोऽभिधत्ते—

स्पर्शः पुरा परिचितो नियतं स एव
सञ्जीवनश्च मनसः परितोषणश्च।
सन्तापजां सपदि यः परिहृत्य मूर्च्छा-
मानन्दनेन जडतां पुनरातनोति[४]॥

अन्यत्र च—

आलिम्पन्नमृतमयैरिव प्रलेपैरन्तर्वा बहिरपि वा शरीरधातून्।
संस्पर्शः पुनरपि जीवयन्नकस्मादानन्दादपरमिवादधाति मोहम्[५]॥

अत्रेदं तात्पर्यम्—आनन्दानुभूतिः पीयूषास्वादवन्मनस्तोषिण्यगाधतृप्तिकरी च। आनन्दानुभूतिरपि मोह इवास्ते। मोहे यथा निश्चेष्टता भवति, तथैवाऽऽनन्देऽपि। आनन्दप्रदानेन नवीना काचिदनिर्वचनीया जडता प्रकटीकृता। जाड्यं द्विविधं मोहावस्थायाम्, आनन्दावस्थायाञ्चेति[६]।

मालतीं प्रत्यनुरक्तस्य माधवस्योक्तावप्यानन्दस्याऽयमेवार्थः प्रकटितः। यथा—

---

१. उत्तररामचरितम्-२।१२;
२. तत्रैव, वीरराघवस्य टीका।
३. तत्रैव-६।३३;
४. तत्रैव-३।१२।
५. तत्रैव-३।३१;
६. तत्रैव, प्रियंवदा-टीका-३।१२।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

यद्विस्मयस्तिमितमस्तमितान्यभाव-
मानन्दमग्नममृतप्लवनादिवासीत् ।
तत्सन्निधौ तदधुना हृदयं मदीय-
मङ्गारचुम्बितमिव व्यथमानमास्ते[1] ।।

नैषधीयचरिते महाकविना श्रीहर्षेणाऽनेकत्रप्रयुक्तानामानन्दशब्दस्य प्रयोगस्थलानामनुशीलनेनाप्यानन्दपदार्थं स्फुटं प्रकाशते। तत्रानन्दो निर्मुक्तो निस्सीमो वेलातिक्रान्तसुधासमुद्रवदगाधो गम्भीरो वाक्पथातीतो हृदयानुभवः प्रोक्तः। 'वचसामपि गोचरो न यः स तमानन्दमविन्दत द्विजः'[2] 'हृदयभरणोद्वेलानन्दः सखीवृतभीमजा, नयनविषयीभावे भावं दधार धराधिपः'[3]। 'स्वाच्छन्द्यमानन्द-परम्पराणां भैमी तमालोक्य किमप्यवाप। महारयं निर्झरिणीव वारामासाद्य धाराधरकेलिकालम्'[4] इत्यादिभिरुक्तिभिरर्थोऽयं प्रमाणितः। अस्यानुभूतिरानन्दमृद्वीका मधुरसवन्मादयति—'अधिगतमतिवेलानन्दमार्द्वीकमत्तः'[5]। अस्यां सान्द्रताऽगाधता तन्मयता च भवति यस्यां निमग्नस्याऽन्यस्य कस्यापि वस्तुनोऽभावो न प्रतीयते। इत्थमानन्दशब्दस्य व्युत्पत्तिलभ्योऽर्थः सर्वथा सङ्गच्छते—'आ समन्तान् नन्दति, नन्दयति वा समृद्धं करोति भवति वा इत्यानन्दः'।

नैषधीयचरितस्यैकेन पद्येनास्यानुभूतेः सम्यग् व्याख्यानं विधातुं शक्यते। तथा हि—

तन्नालीकनले चलेतरमनाः साम्यान्मनागप्यभू-
दप्यग्रे चतुरः स्थितान्न चतुरापातुं दृशा नैषधान्।
आनन्दाम्बुनिधौ निमज्ज्य नितरां दूरं गता तत्तला-
ल्लङ्कारीभवनाज्जनाय ददती पातालकन्याभ्रमम्[6] ।।

अयमाशयः—नलेऽनुरक्ताया दमयन्त्याश्चित्तं तं प्रति स्थिरं तन्मयञ्चासीत्। स्थिरे तन्मये च चित्ते आनन्दोद्रेकः स्वाभाविकः। अत एव तस्मिन्नानन्दसुधासमुद्रे निमग्नां हर्षस्य परां सीमानमवाप्तां दमयन्तीं पातालकन्याभ्रमं जनयित्रीं वर्णयति हर्षः।

१. मालतीमाधवम्-१।२०;
२. नैषधमहाकाव्यम्-२।१।
३. तत्रैव-७।१०८;
४. तत्रैव-८।८,७।२,४।११२।
५. तत्रैव-३।१३५;
६. तत्रैव-१२।१११।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

इत्थमानन्दपदार्थस्यानुशीलनानन्तरं ज्ञायते यदानन्दानुभवे सहृदयानां हृदयं द्रुतं मनस्तन्मयं चित्तमैकाग्र्यं नयनं वाष्पजलाप्लुतं शरीरं पुलकितं वचनं गद्गदञ्च भवति।

**सुखानन्दयोरन्तरम्**

प्रायो जनाः सुखे आनन्दे च भेदं नावगच्छन्ति। परं तात्त्विकदृशा द्वयोर्वर्तते किमप्यन्तरम्। सुखं द्विविधं सातिशयं निरतिशयञ्च। तत्र निरतिशयसुखमेवानन्दः। स एव ब्रह्मणः स्वरूपभूतः। सातिशयं सुखं परिवर्तनशीलं क्षणभङ्गुरमस्थिरञ्चास्ति। आनन्दो नित्यः स्थिरश्चास्ति। यतो हि जाग्रत्-स्वप्न-सुषुप्तिसु तुरीयावस्थायांञ्चाऽय-मनुभूयते। एतावता प्रतिभाति यदात्मनः स्वाभाविकं लक्षणमानन्दः।

पुनः सुखदुःखयोश्च द्वन्द्वो वर्तते, 'सुखं हि दुःखान्यनुभूय शोभते' इत्युक्तेः। आनन्दश्च द्वन्द्वातीतः। तदनुभूतिश्चाद्वैतानुभूतिः। सुखमानन्दस्याल्पीयसी मात्रोच्यते, 'तस्यैव मात्रामुपजीवन्ति' इति श्रुतेः। आनन्दश्चाऽऽनन्दघनशब्देनोच्यते। सुखस्य सम्बन्धः शरीरेन्द्रियमनोभिः 'आनन्दस्य च स्वात्मना। सुखं ज्ञेयं विषयश्च' आनन्दो विषयी ज्ञाता च। सुखं लौकिकमानन्दो ह्यलौकिकः। सुखमानन्दे निर्भरमानन्द-श्चात्मनिर्भरः। सुखस्य क्षेत्रमभ्युदयः आनन्दस्य च निःश्रेयससिद्धिः। आनन्दश्चाभय-पदमस्ति 'द्वितीयाद् वै भयं भवतीति' श्रुतेः। आनन्दानुभूतौ आनन्दमयावस्था-यामन्यस्याभानादभयप्राप्तिर्भवति। आनन्दास्वादे निमग्नस्यान्यत् सर्वं तिरोहितं भवति। एवंभूतस्यानन्दस्योपलब्धौ तदेव साधनं यदात्मलाभस्य। ज्ञान-कर्म-भक्ति-प्रपत्ति-पुष्टि-योगमार्गाश्च एतस्योपलब्धौ साधनानि सन्ति। परमानन्दावाप्तिरेव मोक्षः।

इत्थं सुखानन्दयोरन्तरं सोपानपरम्पराया अन्तरमस्ति। सुखं प्रथमः सोपान आनन्दश्चान्तिमः।

**प्रीतिरानन्दयोर्भेदः**

'प्रीञ् तर्पणे कान्तौ च' इत्यस्माद्धातोर्निष्पन्ना प्रीतिस्त्रिविधा भवति— इन्द्रियतृप्तिः, मनस्तृप्तिः, आत्मतृप्तिश्च। अत्राऽऽत्मतृप्तिस्तु साक्षात् परानन्द-रूपैव। तत्र प्रीतेरानन्दस्य च नास्ति भेदः, परम् इन्द्रियतृप्तौ मनस्तृप्तौ वा तस्यै-वानन्दस्याभासमात्रम्, न तु स एवानन्द इत्यस्ति प्रीत्यानन्दयोर्भेदः। इच्छापूर्तिरूपा या प्रीतिः, सा तु विषयसम्बन्धात् सुखपदवाच्या, न तु परमानन्दरूपा।

प्रीतौ मनःप्रसादो भवति। स च दुःखहानाद् इष्टलाभाद्वा भवति। मनःप्रसादाच्च चित्तस्थैर्यं तदनन्तरमानन्दानुभव इत्यस्ति प्रीत्यानन्दयोः सोपानपरम्परेव क्रमः। निरुपाधिका प्रीतिरानन्द एव।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

अनेन विश्लेषणेन प्रतीयते यदा चित्तं स्वस्वभावसुलभचाञ्चल्यं विहाय तन्मयं भूत्वा परं विश्रान्तं भवति चित्तस्य तन्मयावस्थायां स एव विश्रामो निर्वृतिविशेष आनन्दपदार्थः।

**आनन्दस्य प्रभेदाः**

आनन्दपदार्थस्यानुशीलनानन्तरमस्य प्रभेदानां वर्णनं स्वरूपविवेचनञ्चावश्यकं प्रतिभाति। आध्यात्मिकदृशा आनन्दशब्दः परब्रह्मणः स्वरूपाभिधायको यत् स्वरूपमखण्डमद्वैतमतुलमभयं प्रशान्तं प्रसन्नं शिवं सहजं समरसं प्रतिभाति। परं व्यवहारेऽस्य प्रयोगो बहुष्वर्थेषु दृश्यते। फलत आनन्दशब्दः प्रयोगानुसारं वर्गद्वये विभक्तः—आध्यात्मिकानन्द एकः, आधिभौतिकानन्दश्चापरः। आध्यात्मिकानन्दे ब्रह्मानन्दः, मोक्षानन्दः, योगानन्दः, भक्त्यानन्दश्च परिगण्यन्ते। भौतिकानन्दस्य पुनस्त्रयो भेदाः—इन्द्रियानन्दः, रागात्मकानन्दः, बौद्धिकानन्दश्च। परमानन्दस्येदं वर्गीकरणमात्यन्तिकं नास्ति। यतो ह्यानन्दस्योभावपि प्रयोगावन्योन्यापेक्षिणौ वर्तेते। यथा, इन्द्रियानुभूतिर्बौद्धिकानुभूतिर्वा आध्यात्मिकानुभूतिं विनाऽसम्भविनी तथैवाध्यात्मिकानुभूतिरपि सर्वथा इन्द्रियानुभूतिनिरपेक्षा भवितुं नार्हति। अतो वक्तुं शक्यते यदिदं वर्गीकरणं सर्वांशत आनन्दस्य वर्गीकरणं नास्ति। केवलं तत्तत्प्रभेदेष्वनुस्यूतस्य कस्यचिदेकस्य तत्त्वस्य प्राधान्यं द्योतयति।

वर्णितेष्वानन्दप्रभेदेष्वेको बहुचर्चितः प्रभेदोऽवशिष्यते, योऽस्ति काव्यानन्दः, यः पूर्वोक्तान् सर्वानपि प्रभेदानतिशेते पूर्वोक्तेभ्यः सर्वेभ्योऽपि प्रभेदेभ्यो विलक्षणश्च वर्तते। काव्यशास्त्रिभिरयमानन्दो रसशब्देन संज्ञितः।

**ब्रह्मानन्दः**

आनन्दप्रभेदानां स्वरूपविश्लेषणाय तिस्रोऽप्यानन्दानुभूतयो विश्लेषणीयाः सन्ति। तत्र तावदाध्यात्मिकानन्देषु ब्रह्मानन्द एव विवेचनीयः। श्रुतौ आनन्दः परब्रह्मणः स्वरूपम्। तत्र तस्यानन्दरूपताऽतिचर्चिता वर्तते। तथा हि—'तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति'[१], 'आनन्दं ब्रह्मणो विद्वान्'[२], 'आनन्दो ब्रह्मेति व्यजानात्'[३], 'रसो वै सः', 'रसं ह्येवाऽयं लब्ध्वाऽऽनन्दीभवति'[४] 'आधारमानन्दमखण्डबोधं यस्मिन् लयं याति पुरत्रयं च'[५], 'आनन्दाब्धिर्यः परः

१. मुण्डकोपनिषद्-२।२।७; २. तैत्तिरीयोपनिषद्-२।४।
३. तत्रैव-३।६; ४. तत्रैव-२।७।
५. कैवल्योपनिषद्-१४।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

सोऽहमस्मि प्रत्यग्धातुर्नात्र संशीतिरस्ति। आनन्दमन्तर्निजमाश्रयं तमाशापिशाचीमवमानयन्तम्'[१] 'सर्वपूर्णस्वरूपोऽस्मि सच्चिदानन्दलक्षण:'[२], 'परब्रह्मस्वरूपोऽहं परमानन्दमस्म्यहम्'[३], 'नित्यशुद्धचिदानन्दसत्तामात्रोऽहमव्यय:। नित्यबुद्धं विशुद्धैकसच्चिदानन्दमस्म्यहम्'[४], 'नामरूपविमुक्तोऽहमहमानन्दविग्रह:'[५] इत्यादीनि श्रुतिवाक्यानि ब्रह्मण आनन्दस्वरूपतां मुहुर्मुहु: प्रतिपादयन्ति। न केवलं निर्गुणं ब्रह्म, अपि तु सगुणब्रह्मणो विविधस्वरूपाणां विष्णुरामकृष्णशिवादीनां माहात्म्यवर्णने तेषामानन्दरूपताया बहुधोल्लेखोऽस्ति। तैत्तिरीयोपनिषदि सृष्टेरुद्भव आनन्दात्, स्थितिलयादयश्चानन्द एव वर्णिता: सन्ति[६]। बृहदारण्यकोपनिषद्यपि परमानन्दरूपेणाऽयं वर्णित:। अस्यानन्दस्य मात्रामाश्रित्यान्ये प्राणिनो जीवन्ति। अयमानन्दो मनुष्य-पितृगण-गन्धर्व-कर्मदेव-आजानदेव-प्रजापति-निष्कामश्रोत्रिय-ब्रह्मलोकानन्देषु यथोत्तरं शतगुणोत्कृष्ट इति निरूपयन् निष्कामब्रह्मविद् एतान् सर्वानानन्दान् अनुभवतीत्युक्तम्[७]।

तथ्यमिदं तैत्तिरीयोपनिषद्यपि प्रकारान्तरेण वर्णितमस्ति, यत्रोपर्युक्तानां मनुष्यगन्धर्वादीनां क्रमश: शतगुणोत्तराधिकानन्दानां समे प्रभेदा एकत्वं प्राप्नुवन्ति, स आनन्द: प्रजापतिब्रह्मण:, सोऽपि तस्य परमानन्दस्य एका मात्राऽस्ति, यस्यानन्दस्य मात्रा: समुद्रजलस्य बिन्दुवद्विभक्ता:, पुन: यस्मिन्नानन्दे एकत्वं प्राप्नुवन्ति, स एव स्वाभाविकोऽद्वैतरूपेण स्थित: परमानन्दोऽस्ति, यत्र आनन्दस्याऽऽनन्दिनो वा भेदो न वर्तते[८]।

एवमयमानन्दो ब्रह्मण: स्वरूपमस्ति, गुणो वा धर्मो वा नास्ति। अतो ब्रह्मणो निर्विशेषताया व्याघातको नास्ति। ब्रह्म स्वप्रकाशचैतन्यमयं सुखस्वरूपमस्तीत्येव 'विज्ञानमानन्दं ब्रह्म'[९] इति श्रुतेस्तात्पर्यम्। एतदेव बृहदारण्यकभाष्येऽपि चर्चितम्[१०], तत्र विज्ञानमानन्दो वाऽभिन्नरूपतया ब्रह्मण: स्वरूपमिति निरूपयन् इदं स्वरूपभूतविज्ञानं विषयविज्ञानवद् दु:खानुविद्धं नास्त्यपि तु प्रसन्नं शिवमतुलं सहजं नित्यतृप्तमेकरसमस्तीति वर्णितम्[११]।

---

१. मैत्रेय्युपनिषद्-१।११-१२; २. तत्रैव-३।१२; ३. तेजोबिन्दूपनिषद्-३।११।
४. तत्रैव-३।११; ५. तत्रैव-३।३६।
६. आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्तीति।। (तैत्तिरीयोपनिषद्-३।६)
७. एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति। (बृहदारण्यकोपनिषद्-४।३।३२-३३)
८. तैत्तिरीयोपनिषद्, शाङ्करभाष्यम्-२।८।१-४; ९. बृहदारण्यकोपनिषद्-३।९।२८।
१०-११. तत्रैव, शाङ्करभाष्यम्, ३।९।२८।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

ब्रह्मण इदमानन्दरूपं सुखशब्देनाऽपि वर्णितम्—'यो वै भूमा तत्सुखम्'[1] इति। इदं सुखं लौकिकानुभवानुरोधाद् द्विधा वर्णितं सातिशयं निरतिशयञ्च। तत्र विषयसुखं सातिशयं, ब्रह्मसुखञ्च निरतिशयमुक्तम्[2]। अत इदं सुखमानन्दो वा विज्ञानं वा पृथक् पृथग् वस्तु नास्ति। द्वयोः शब्दयोः प्रयोगः स्वस्वप्रवृत्तिनिमित्तमाश्रित्योपपद्यते। ब्रह्मणि जाड्यनिराकरणाय विज्ञानशब्दः, दुःखरूपताविघाताय च सुखशब्द आनन्दशब्दो वा प्रयुक्तः। अयमानन्दः सांसारिकसुखमात्रं नास्ति, परमसंवेद्यस्य निरतिशयस्यानन्दस्य रूपमस्ति[3]।

आनन्दस्यानिवार्यस्वरूपं परिपूर्णता निरतिशयता च वर्तते। इदं छान्दोग्योपनिषदि 'यो वै भूमा तत्सुखम्' इति श्रुतिव्याख्यानेऽपि निरूपितम्। भूमाशब्दं व्याकुर्वाणा श्रुतिस्तं क्रियाकारकभावरहितमभेदस्वरूपं प्राह। यावदितरसम्भावना दृष्टिदृश्यविभाजनं वा वर्तते, तावदल्पता वर्तते, इयमल्पतैव दुःखबीजम्। अतो वास्तविकं सुखं ब्रह्मस्वरूपमेव, तच्च स्वतः प्रतिष्ठितम्। अनयोक्त्या छान्दोग्ये ब्रह्मणः स्वरूपभूतस्य सुखस्याऽऽनन्दस्य स्वसंवेद्यता अन्यासंवेद्यता च प्रोक्ता। तदेवोपरि पुरस्तात् पृष्ठतः सर्वासु दिक्षु च वर्तते[4]।

इत्थं श्रुतिषु बहुवर्णितां ब्रह्मण आनन्दरूपतां समीक्ष्य काश्चन जिज्ञासाः समुद्भवन्ति—

---

१. छान्दोग्योपनिषद्, ७।२३।१, ७।२४।१।

२. सुखं च द्विविधं सातिशयं निरतिशयञ्चेति। तत्र सातिशयं सुखं विषयानुसङ्गजनितान्तःकरणवृत्तितारतम्यकृतानन्दलेशाविर्भावविशेषः। निरतिशयसुखं च ब्रह्मैव।
(वेदान्तपरिभाषा, प्रयोजनपरिच्छेदः)

३. तस्मादात्मप्रकाशप्रकृष्टानन्दस्वभावमेव ब्रह्मेति युक्तम्। एवञ्च लौकिकानन्द एतस्य मात्रेति युज्यते। अवच्छेदात्, दुःखनिवृत्तौ तु दुर्योजमेतत्। इतश्चानन्दस्वभाव आत्मा, परमप्रेमास्पदत्वात्। (ब्रह्मसिद्धिः, पृ.५)

४. यो वै भूमा महन्निरतिशयं बह्विति पर्यायास्तत्सुखम्। ततोऽर्वाक् सातिशयत्वादल्पम्। अतस्तस्मिन्नल्पे सुखं नास्ति। अल्पस्याधिकतृष्णाहेतुत्वात्। तृष्णा च दुःखबीजम्। नहि दुःखबीजं सुखं दृष्टं ज्वरादि लोके। तस्माद्युक्तं नाल्पे सुखमस्तीति। अतो भूमैव सुखम्। तृष्णादिदुःखबीजत्वासम्भवाद्भूम्नः। (छान्दोग्योपनिषद्, शाङ्करभाष्यम्-७।२३।१)
यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाथ यत्रान्यत्पश्यत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्। (तत्रैव, ७।२४।१)
स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदं सर्वमित्यथातोऽहङ्कारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदं सर्वमिति। (तत्रैव, ७।२५।१)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

१. संसारे प्रसिद्धस्य सुखार्थकानन्दस्य, ब्रह्मण: स्वरूपानन्दस्य च को भेद:?

२. मोक्षे य आत्मानन्दोऽनुभवपथमायाति किं ब्रह्मानन्दस्तस्मात् पृथग्वर्तते?

३. अपि च विज्ञानं क्रियारूपं तस्य च कारकमन्तरा निष्पत्तिर्भवितुं नार्हति। अत: स्वरूपभूतविज्ञानमपि पृथगेव वर्तते।

आसां जिज्ञासानां समाधानार्थमानन्दपदार्थोऽपि पर्याप्तं विवेचित:। तैत्तिरीयोपनिषद्भाष्ये आनन्दपदार्थो बहुधा विमृष्ट:। ब्रह्मण: स्वरूपभूतस्यानन्दस्य विवेचने स आनन्दो विषयानन्दात् पृथगत्युत्कृष्टश्च वर्णित:। लौकिकसुखस्य दृष्टान्तद्वाराऽऽनन्दस्वरूपं बोधयन् स आनन्दो लोकसुखसीमातिक्रान्त:, परमात्मनोऽभिन्नस्वरूप: परिपूर्णश्चोक्त:[१]।

केचन मनीषिणो निगदन्ति, आनन्दशब्दोऽयं दु:खाभावं बोधयन् ब्रह्मणि सार्थक:। अयं भावरूपो नास्ति, परमिदं न युक्तम्। अयमानन्दो भावरूपो न त्वभावरूप:। यतो हि सांसारिकानन्दस्य भावरूपेणैवोपलब्धिर्भवति। एतावत् कालपर्यन्तम् अहं दु:खी नासम् एतादृश्यनुभूतिर्न केषाञ्चिदपि जायते, परम् 'अहं सुखी' एतादृश्येवानुभूति: सर्वेषां भवति। अयं सांसारिकानन्दो ब्रह्मानन्दस्यैव कणमात्राभास:, एतावता ब्रह्मानन्दो भावरूपैव सिद्ध्यति। पुनश्चोपनिषत्स्वात्मा पुत्रमित्रकलत्राद्यपेक्षया परमप्रेमास्पदं वर्णितम्, प्रेम एवानन्द:। अत आनन्दो भावरूप: सिद्ध्यति[२]।

ब्रह्म आनन्दस्वरूपं सुखस्वरूपं वास्ति, अत्र किं बीजमिति जिज्ञासायाम् एवं वक्तुं शक्यते, प्राणिनां स्वानुभव एवात्र प्रमाणम्। सर्वोऽपि जन: स्वसत्तां

---

१. किमानन्दो विषयविषयिसम्बन्धजनितो लौकिकानन्दवद् आहोस्वित् स्वाभाविक इत्येवमेषाऽऽनन्दस्य मीमांसा। तत्र लौकिकानन्दो बाह्याध्यात्मिकसाधनसम्पत्तिनिमित्त उत्कृष्ट:। स य एष निर्दिश्यते ब्रह्मानन्दानुगमार्थम्। अनेन हि प्रसिद्धेनानन्देन व्यावृत्तविषयबुद्धिगम्य आनन्दोऽनुगन्तुं न शक्नोति। लौकिकोऽप्यानन्दो ब्रह्मानन्दस्यैव मात्रा अविद्यया तिरस्क्रियमाणे विज्ञान उत्कृष्यमाणायां चाविद्यायां ब्रह्मादिभि: कर्मवशाद्यथाविज्ञानं विषयादिसाधनसम्बन्धवशाच्च विभाव्यमानश्च लोकेऽनवस्थितो लौकिक: सम्पद्यते।....निरस्ते त्वविद्याकृते विषयविषयिभागे विद्यया स्वाभाविक: परिपूर्ण एक आनन्दोऽद्वैतो भवति।..अभिन्न: स्वाभाविक आनन्द: परमात्मैव, न विषयविषयिसम्बन्धजनित इति।
(तैत्तिरीयोपनिषद्, शाङ्करभाष्यम्-२।८।४)

२. तस्मादात्मप्रकाशप्रकृष्टानन्दस्वभावमेव ब्रह्मेति युक्तम्। एवञ्च लौकिकानन्द एतस्य मात्रेति युज्यते, अवच्छेदात्, दु:खनिवृत्तौ च दुर्योजमेतत्। इतश्चानन्दस्वभाव आत्मा परमप्रेमास्पदत्वात्। श्रूयते हि परमप्रेमास्पदत्वम्। तदेतत्प्रेय: पुत्रादिति। (ब्रह्मसिद्धि:, पृ. ५)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

वाञ्छति। न कोऽपि स्वाभावं वाञ्छति एवं सर्वोऽपि जनो ज्ञानं कामयते, न त्वज्ञानम्। एवं सर्वोऽपि जनः सुखं कामयते न दुःखम्[१]। अतः सर्वेषां प्राणिनां स्वभाव एव सच्चित्सुखात्मकः प्रतीयते। सङ्क्षेपशारीरकेऽपि सर्वज्ञमुनिना आत्मन आनन्दरूपता साधिता। यतो हि प्राणिनामात्मा सर्वाधिकप्रियस्तथा सुषुप्त्यनन्तरं 'सुखमहमस्वाप्सम्, न किञ्चिदवेदिषम्' इति स्मरणद्वारा या सुखस्य प्रतीतिः, सैव प्रमाणं सुखस्वरूपे ब्रह्मण्यात्मनि वा। प्राणिनामात्मा सर्वाधिकप्रियो भवति, स्वात्मनि च सर्वेषामाब्रह्मकृमिकीटादीनां प्राणिनां निरुपाधिका प्रीतिर्दृश्यते। अत एवाऽऽत्मा ब्रह्म वा सुखस्वरूपं परमप्रेमास्पदम्। यतो हि यद्वस्तु सुखात्मकं न भवति, तत् प्रेमास्पदमपि न भवति[२]।

आनन्देन न्यायरत्नदीपावल्याम्[३], चित्सुखाचार्येण तत्त्वप्रदीपिकायाम्[४], विमुक्तात्मना चेष्टसिद्धावात्मन आनन्दरूपता मीमांसिता। तत्र विमुक्तात्मनो मतं यच्छुभकर्मणः फलस्वरूपोपस्थितविषयेण सहेन्द्रियसंयोगे जातेऽन्तःकरणं प्रसीदति; अस्यां प्रसन्नवृत्तावात्मा स्फुटं प्रतिबिम्बते तत् प्रतिबिम्बितात्मानन्द एव आनन्दनाम्नाऽनुभूयते व्यवह्रियते च। शास्त्रेष्विदं विषयसुखमित्युक्तम्। यस्यात्मनश्छायामात्रेणाऽन्तःकरणमानन्दनिमग्नं भवति स आत्मा एव वस्तुत आनन्दरूपः[५]।

'अद्वैतसिद्धि'नाम्नि ग्रन्थे आचार्यो मधुसूदनसरस्वती आनन्दस्वरूपं विवेचयन् नैकान् विकल्पानुद्भाव्य समाहितवान्। तथा हि—

---

१. न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति। न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति।
(बृहदारण्यकोपनिषद्-२।४।५)

२. प्राज्ञे सुखं समनुभूय समुत्थितः सन् सर्वप्रकारविषयप्रतिपत्तिशून्ये ।
सुप्तोऽहमत्र सुखमित्यनुसन्दधानः सर्वोऽपि जन्तुरवगच्छति तस्य सौख्यम् ।।
प्रेमाऽनुपाधिरसुखात्मनि नोपलब्धः स प्रत्यगात्मनि कृमेरपि नित्यसिद्धः ।
प्रेयः श्रुतेरपि ततः सुखताऽनुमानं नैयायिकोऽपि न दृगात्मनि निह्नुवीत ।।
(सङ्क्षेपशारीरकम्-१।२३-२५)

३. न्यायरत्नदीपावली, पृ., १३१।१३६।

४. तत्त्वप्रदीपिका, पृ. ५६६-५६८।

५. शुभकर्मणा उपस्थापिते विषयविशेषे तदिन्द्रियसंयोगाज्जातेऽन्तःकरणवृत्तिविशेषे प्रसन्ने सति निर्मलमिवादर्शे मुखम्, आत्मैवानन्दः प्रकटीभवति। तद्विषयसुखमिति प्रसिद्धं लोके।
(इष्टसिद्धिः, पृष्ठ २८)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

किमानन्दत्वं जातिः? अनुकूलवेदनीयं वा, अनुकूलवेदनं वा, अनुकूलभवनं वा, ज्ञानात्मकं वा, दुःखविरोधि वा, दुःखाभावोपलक्षितस्वरूपं वा, न्यायदर्शनानुरूपं गुणरूपं वा।

आनन्दविषये उद्भूतानेतान् विकल्पान् निराकुर्वन् समाधत्ते—

१. आनन्दत्वं न जातिः। अखण्डस्वरूपानन्दे काऽपि जातिर्न भवति।

२. अनुकूलवेदनीयमपि नास्ति। ब्रह्मस्वरूपे आनन्दे वेदितुरभावात्। ब्रह्म चावेद्यं स्वप्रकाशज्ञानस्वरूपं कस्यापि ज्ञानस्य विषयभूतं नास्ति।

३. अनुकूलता च सापेक्षा वर्तते। अनुकूलता यं प्रति भवति यश्चानुकूलो भवति तयोरपेक्षाऽनुकूलतायां वर्तते। यदि वेदनस्वभावापेक्षयाऽनुकूलता स्वाभाविकीति वयं स्वीकुर्मस्तदा सखण्डताऽऽपद्येत।

यद्यनुकूलता औपाधिकी तदाऽऽनन्दत्वाभावस्यापि सम्भावना जायेत। अतो ब्रह्मस्वरूपेऽनुकूलताया उपपत्तिर्भवितुं नार्हति[१]।

४. यदि ज्ञानात्मक आनन्दस्तदा दुःखादिज्ञानेऽपि स स्यात्। अतो ब्रह्मणः स्वरूपभूत आनन्दोऽनिर्वचनीय एवेत्यपि न वक्तव्यं तस्य निर्वचनसम्भवात्। निरुपाधिकेष्टत्वं परमप्रेमास्पदत्वमानन्दत्वमिति निर्वचनात्[२]। एतदेव सङ्क्षेपशारीरकेऽपि निरूपितम्—'निरुपाधिकप्रेमास्पदत्वमिति'[३]। स्वामिविद्यारण्योऽव्यभिचारिप्रीत्यास्पदत्वमानन्दत्वमिति प्राह[४]।

शैवदर्शनेऽपि विशिष्टार्थे आनन्दोऽयं प्रतिपादितः। तत्र आत्मा विमर्श-पराशक्ति-चिति-प्रकाशैकघनपरमेश्वर-परासंवित्-परमशिव-परमपद-परमवीर्य-परमामृत-परमतेजः-परमज्योतिरादिभिः शब्दैर्व्यवहृतः परमानन्दमय इत्यपि वर्णितः। परमशिवस्यान्यदपि रूपं शक्तिशब्देन व्यवहृतं यत् परमशिवेन पूर्णतयाऽभिन्नमिति

---

१. आनन्दत्वं जातिविशेषो वा, अनुकूलतया वेदनीयत्वं वा, अनुकूलवेदनत्वं वा, अनुकूलत्वमात्रं वा, ज्ञानात्मकत्वमेव वा, दुःखविरोधित्वं, दुःखाभावोपलक्षितस्वरूपत्वं वा पराङ्गीकृतं वा।...नाद्यः, अखण्डस्वरूपानन्दे तद्भावात्। न द्वितीयः, मोक्षे वेदितुरभावाद् आत्मनो वेद्यत्वाच्च। किञ्च आनुकूल्यं किञ्चित्सापेक्षं न चान्यं प्रति तद्युक्तमिति स्वं प्रत्येव वक्तव्यत्वेन सविशेषत्वापातात्। (अद्वैतसिद्धिः, पृ. ७५०-५१)

२. आनन्दत्वस्य निरुपाधिकेष्टरूपत्वात्, (अद्वैतसिद्धिः, पृ. ७५१)

३. सङ्क्षेपशारीरकम्-१।२३,२५।

४. सुखे वैषयिके प्रीतिमात्रमात्मा त्वतिप्रियः।
सुखे व्यभिचरत्येषा नात्मनि व्यभिचारिणी ।। (पञ्चदशी-१२।२५)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

तत्राङ्गीकृतम्[१]। अस्याः पञ्चभेदेषु द्वितीयः प्रभेद आनन्दशक्तिरिति शब्देन परिगणितः। सा शक्तिः स्वतन्त्रतयाऽऽत्मानं निरपेक्षमानन्दमनुभावयति। नेत्रतन्त्रे वर्णितं यद् शिवादभिन्ना सा चिद्रूपा शक्तिरद्भुतमानन्दं वितनोति। योगी तत् सामरस्यं समवाप्याऽऽनन्दविलीनो भवति[२]।

अस्मिन्नेवार्थे सौन्दर्यलहर्यां शङ्कराचार्योऽपि—

शिवाऽऽकारे मञ्चे परमशिवपर्यङ्कनिलयाम्।
भजन्ति त्वां धन्याः कतिचन चिदानन्दलहरीम्[३]।।

अतः शेषः शेषीत्ययमुभयसाधारणतया।
स्थितः सम्बन्धो वां समरसपरानन्दपरयोः[४]।।

चिदानन्दाकारैः शिवयुवतिभावेन विमृषे[५]।

इत्याद्युक्तिभिः शक्तिमन्तं शिवमानन्दरूपं व्याजहार।

पुनश्च शैवदर्शने जीवस्य जाग्रत्-स्वप्न-सुषुप्ति-तुरीय-तुरीयातीताभिधाः पञ्चावस्था वर्णिताः सन्ति। तत्र तुरीयातीतावस्थायां जीवः 'पूर्णानवच्छिन्न-वपुरानन्दनिर्भरः' इति' प्रोक्तः। एषैवावस्था परमपदशब्देन, अनुत्तरावस्थाशब्देन च वर्णिता, यस्याऽवस्थाया अग्रे काचनाऽन्यावस्था न भवति। यस्यामवस्थायां जीवः पूर्णानन्दस्वरूपो भवति।

तन्त्रालोके प्राणायामविधिनाऽखण्डानन्दप्राप्तिर्निर्दिष्टा। तत्रोक्तम्—'यद्य-प्यानन्दाभिव्यक्ती रसवति हृदये भवति, तथापि शून्यतायां विश्रान्तिवशात् प्रथमं

---

१. शिवसूत्रविमर्शिनी, पृ. ४, प्रत्यभिज्ञाहृदयम्, पृ. २-८, नेत्रतन्त्रम्, प्रथमो भागः, पृ.५४-५५।

२. (क) तस्य च स्वातन्त्र्यमानन्दशक्तिः, तच्चमत्कार इच्छाशक्तिः, प्रकाशरूपा चिच्छक्तिः, आमर्शात्मकता ज्ञानशक्तिः, सर्वाकारयोगित्वं क्रियाशक्तिः; इत्येवं मुख्याभिः शक्तिभिर्युक्तोऽपि वस्तुत इच्छाज्ञानक्रियाशक्तियुक्तोऽनवच्छिन्नः प्रकाशो निजानन्दविश्रान्तशिवरूपः स एव स्वातन्त्र्यादात्मानं सङ्कुचितमवभासयन् अणुरित्युच्यते।
(तन्त्रसारः, प्रथमाह्निकम्, पृ. २१)

एवं शून्यात् प्रभृति व्यानान्तं या एता विश्रान्तयस्ता एव निजानन्दः, निरानन्दः; परानन्दो ब्रह्मानन्दोः; महानन्दः, चिदानन्द इति षडानन्दभूमय उपदिष्टाः, यासामेकोऽनुसन्धाता उदयास्तमयविहीनोऽन्तर्विश्रान्तिपरमार्थरूपो जगदानन्दः।
(तन्त्रसारः पञ्चमाह्निकम्, पृ. १६७)

(ख) नाहमस्मि न चान्योऽस्ति ध्येयं चात्र न विद्यते।
आनन्दपदसंलीनं मनः समरसीगतम्।। (नेत्रतन्त्रम्, प्रथमो भागः, पृ. १९८)

३-४-५. सौन्दर्यलहरी, श्लोक. ८,३४,३५।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

योगी निरानन्दो भवति। प्राणायामद्वारा यदा स प्राणवायुक्षेत्रे प्रविशति, तदा परानन्दं प्राप्नोति। अपानवायुक्षेत्रे स परानन्दादग्रे सरति, परं समानवायुक्षेत्रे प्रविश्य स ब्रह्मानन्दमयो भवति। उदानवायुक्षेत्रे च स महानन्दं प्राप्नोति, परं व्यानवायुक्षेत्रे विश्रान्तिं समवाप्य सर्वोपाधिविनिर्मुक्तो भूत्वा चिदानन्दं प्राप्नोति[१]।

शैवसिद्धान्ते इयं चिदानन्दावस्था एव मोक्षावस्थाऽभिधीयते। मृगेन्द्रतन्त्रे वर्णितं यद् योगी योगविधिना समस्तचिन्तनविनिर्मुक्तो भूत्वा यदा स्वहृद्देशे निज-स्वरूपं साक्षात्करोति, तदा ज्ञानमयमखण्डानन्दमयमव्ययरूपं प्राप्नोति। सैव 'शिवोऽहम्' इति स्थितिः[२]। तस्यां स्थितौ योगी अखण्डानन्दघनात् शिवादभिन्नो भूत्वा अखण्डमानन्दमनुभवति, पुनः अशिवममङ्गलमयं दुःखं प्रति न परावर्तते। ईश्वरप्रत्यभिज्ञाविवृत्तिविमर्शिन्यामपि योगिनामस्या अन्तिमावस्थितेरुल्लेखो वर्तते। तत्रोक्तम्—'योगी तस्मिन्ननन्ते तत्त्वसमूहरूपिणि शिवतत्त्वे विलीयते यत् चिदानन्दघनपरमाक्षरस्वरूपमस्ति'[३]। इत्थं प्रत्यभिज्ञादर्शनानुसारं शिव एव चिदानन्दघनः, शिवत्वप्राप्तिरेव मोक्षप्राप्तिर्वर्तते।

**मोक्षानन्दो योगानन्दश्च**

समस्तभारतीयदर्शनानामेकमेवोद्देश्यं प्राणिनामात्यन्तिकी दुःखनिवृत्तिः परमानन्दावाप्तिश्च। अतः सर्वे दार्शनिकसम्प्रदाया दुःखोच्छेदाय परमानन्दावाप्तये च दुःखदुःखहेतु-मोक्ष-मोक्षोपायरूपचतुर्व्यूहात्मकं सिद्धान्तं प्रतिपादयन्ति। एषु दार्शनिकसम्प्रदायेषु बौद्ध-जैन-न्याय-वैशेषिक-साङ्ख्ययोग-मीमांसा-वेदान्तादि-मतावलम्बिनो यां मुक्तिं काङ्क्षन्ति, सा क्वचिदविद्यानाशेन, क्वचित् कर्मावरण-भङ्गेन क्वचिद् विवेकज्ञानेन, क्वचित् कैवल्यसिद्ध्या तदनुसारं स्वरूपप्रतिष्ठायां प्रतिष्ठिते सति क्वचिदज्ञानावरणभङ्गेन, क्वचिद् ब्रह्मसायुज्येन च भवति। सर्वेषां मतेषु मुक्तिर्दुःखोच्छेदकारिणी यस्यां सिद्धौ पुरुषो जन्ममरणबन्धनाद् विनिर्मुक्तो भवति। अयमेव मोक्षः। प्रायः सर्वेषां मतेषु मुक्तिरात्यन्तिकदुःखनिवृत्तिरूपैवास्ति, तथापि तस्या आनन्दरूपतायाश्चर्चाऽद्वैतवेदान्ते विशेषतयोपलभ्यते। तत्र ब्रह्मणः

---

१. तन्त्रालोकः, पञ्चमाह्निकम्, श्लो. ४४-५२।

२. तेन प्रकाशरूपेण ज्ञानशक्तिप्ररोचना। सर्वकारकनिष्पाद्यमवैति विषयं परम्।।
(मृगेन्द्रतन्त्रम्, विद्यापादे-१।१०।१०, योगपादश्च)

३. (क) ईश्वरप्रत्यभिज्ञाविवृत्तिविमर्शिनी (द्वितीयो भागः) पृ. २६८; प्रत्यभिज्ञाहृदयम्, पृ. ५२।
(ख) अज्ञानं किल बन्धहेतुरुदितः शास्त्रे मलं तत्स्मृतं
पूर्णज्ञानकलोदये तदखिलं निर्मूलतां गच्छति।
ध्वस्ताशेषमलात्मसंविदुदये मोक्षश्च तेनामुना
शास्त्रेण प्रकटीकरोमि निखिलं यज्ज्ञेयतत्त्वं भवेत्।। (तन्त्रसारः, प्रथमाह्निकम्)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

स्वरूपं सच्चिदानन्दात्मकमस्ति। अत एव तेषां मतेन आनन्दात्मकब्रह्मावाप्तिश्च मोक्षः शोकनिवृत्तिश्च[१]। यथोक्तम्—'ब्रह्मविद् ब्रह्मैव भवति'[२], 'तरति शोकमात्मवित्'[३], 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय'[४] इति। अतो मोक्षानन्दो ब्रह्मानन्दावाप्तेरानन्दः। योगसाधनेनापि जीवो जन्मजन्मान्तर-बन्धनाद् विनिर्मुक्तो भूत्वा स्वरूपप्रतिष्ठायां प्रतिष्ठितो भवति यत्र केवला चितिशक्तिरेव भासते[५]। अयमेव योगस्यानन्दः।

**भक्त्यानन्दः**

ईश्वरे परानुरक्तिरेव भक्तिः[६]। नारदानुसारं सा परमप्रेमस्वरूपा, अमृतस्वरूपा च[७]। यल्लब्ध्वा पुमान् अमृतो भवति तृप्तो भवति च[८]। अस्यां भक्तौ सर्वत्र स्वाराध्य एव दृश्यते। इत्थं भगवदाकारकारितायां चित्तवृत्तौ परमानन्दस्य भगवतोऽनुभूतिरेव भक्त्यानन्दः। श्रीमद्भागवते प्रोक्तम्—

यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्।
योगेन दानधर्मेण श्रेयोभिरितरैरपि।
सर्वं यद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा।
स्वर्गापवर्गमद्धाम कथञ्चिद् यदि वाञ्छसि[९]।।

श्रीमद्भगवद्गीतायां कृष्णेन प्रोक्तम्—

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते।।
तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।
भवामि न चिरात् पार्थ मय्यावेशितचेतसाम्[१०]।।

अतो भक्तेर्य आनन्दः स ब्रह्मसामीप्यरूपैष आनन्दः। स्वाराध्यसारूप्य-सायुज्यसामीप्यरूपैवानन्दश्च।

---

१. वेदान्तपरिभाषा, प्रयोजनपरिच्छेदः; २. मुण्डकोपनिषद्-३।२।९।
३. छान्दोग्योपनिषद्-१।१।३; ४. श्वेताश्वतरोपनिषद्-३।८।
५. पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति।। (पातञ्जलयोगसूत्रम्-३४)
६. शाण्डिल्यभक्तिसूत्रम्; ७. नारदभक्तिसूत्रम्-२-३।
८. तत्रैव-४-५; ९. श्रीमद्भागवतम्-११।३२।३३।
१०. श्रीमद्भगवद्गीता-१२।६-७।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**आधिभौतिकानन्दः**

तत्तद् भौतिकविषयैः सहेन्द्रियसन्निकर्षे जाते सति, अन्तःकरणे समुद्भूतस्याऽद्भुतमनोह्लादस्य स्थितिरेवाऽऽधिभौतिकानन्दः। अभिप्रायोऽयं वर्तते यस्य वस्तुनो दर्शनेन साक्षात्कारेण वा इन्द्रियाणि तृप्तानि भवन्ति, मनश्चित्तं वा तृप्तं भवति तद्वस्तु प्रियं भवति। अनन्तरं तद्दर्शनादिजन्यं सुखमपि प्रियं भवति। तेनान्तःकरणे तल्लीनतामय्यद्भुताह्लाददायिनी या स्थितिः प्रादुर्भवति, सैवाऽऽधिभौतिकानन्दः। अयमानन्दस्त्रिविधो भवति—१. इन्द्रियानन्दः, २. रागात्मकानन्दः, ३. बौद्धिकानन्दश्च। तत्र इन्द्रियानन्दः प्रियजनदर्शनश्रवणादिजन्य आनन्दः। प्रियस्य स्नेहजन्यो य आनन्दः, स रागात्मकानन्दः, तथा शास्त्रीयप्रश्नानां समाधाने, कठिनग्रन्थग्रन्थिविभेदने, समस्यापूर्तिप्रहेलिकागणितविज्ञानादिविषयकजटिलप्रश्नानां समाधाने च समाधातुरानन्द एव बौद्धिकानन्दः। एतेषामुदाहरणानि तथा हि विषयानन्दे—शकुन्तलाया अद्भुतं सौन्दर्यं समवेक्ष्य 'लब्धं नेत्रनिर्वाणम्'[१] इति वक्तुर्दुष्यन्तस्य य आनन्दस्तथा 'अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा। तारकातरला श्यामा सानन्दं न करोति कम्'[२]।। इति वर्णयितुर्नायकस्य तथा—

त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि।
शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः[३]।।

इति कवयितुर्नायकस्य तथा सख्युर्नेत्रविकासं दृष्ट्वाऽऽलिजनानां य आनन्दः, स इन्द्रियानन्द एव; परन्तु 'आनन्दपरिवाहिणा चक्षुषा परिष्वजमान इव गुरुरुपस्थितः'[४] इत्युक्तौ कण्ठस्य येषामानन्दाश्रूणां चर्चा वर्त्तते, तानि पुत्र्याः सुयोग्यवरप्राप्तेस्तथा तदनुकूलं तस्याः पतिगृहगमनावसरे प्रोद्भूतप्रगाढस्नेह-जन्यतल्लीनतायाः स्थितेः परिचायकानि। इयमेव रागात्मकानन्दस्य स्थितिः।

'क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे'[५] इति पङ्क्तिमभिलक्ष्य रचितानि पद्यानि।

---

१. अभिज्ञानशाकुन्तलम्-तृतीयोऽङ्कः; २. काव्यप्रकाशः-४।७२।
३. तत्रैव-४।३१; ४. अभिज्ञानशाकुन्तलम्, चतुर्थोऽङ्कः।
५. भोजप्रबन्धः-१६८-१७१।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

कमले कमलोत्पत्तिः श्रूयते न च दृश्यते।
बाले तव मुखाम्भोजे कथमिन्दीवरद्वयम्[१]।।

इतीमं श्लोकं श्रुत्वा अर्थञ्चाधिगम्य सहृदयानां मनस्सु यस्यानन्दस्यानुभूतिर्भवति, स एव बौद्धिकानन्दः। 'अत्र तुनोक्तम्, तत्रापि नोक्तम् इति पौनरुक्त्यम्', 'अत्र तुना उक्तम् तत्र अपिना उक्तमिति पौनरुक्त्यम्'[२] इत्यस्मिन् स्थले समस्या-समाधाने, एवं गणितस्य गूढप्रश्नानां समाधाने सति वैज्ञानिकानामाविष्कारसिद्धौ च य आनन्द उपलभ्यते, स बौद्धिकानन्दस्यैव विषयः।

**काव्यानन्दः**

इत्थं ब्रह्मानन्द-मोक्षानन्द-योगानन्द-भक्त्यानन्द-भौतिकानन्दादीनामनुशीलने कृतेऽवशिष्यते एको बहुश्रुतः प्रभेदो य उक्तप्रभेदेभ्यो विलक्षणः काव्यानन्द इत्युच्यते। दृश्यश्रव्योभयविधकाव्यदर्शनश्रवणपठनसमनन्तरमेव यो विशिष्टानन्दः सहृदयैरनुभूयते स एव काव्यानन्दः। एतत्स्वरूपं काव्यतत्त्वज्ञैः सम्यग्विमृष्टम्। विगलितवेद्यान्तरसकलप्रयोजनमौलिभूतेत्यादिविशेषणविशिष्टोऽयमानन्दोऽलौकिको ब्रह्मानन्दसहोदर इति व्यपदिष्टः। युक्तयोगी समाधिस्थः सन् यथा ब्रह्मानन्दे निमग्नो भवति, तथैव सहृदया अपि रसानुभवकाले तल्लीना भवन्ति। साहित्यस्यायमानन्दः काव्यशास्त्रकारै रसपदेनाभिहितः। आनन्दोऽयं विषयानन्दवन् न सातिशयः, न वा ब्रह्मानन्दवन् निरतिशयोऽपि तु पण्डितराजानुसारं चमत्कारत्वापरपर्यायोऽनुभव-साक्षिको जातिविशेषः[३]। रसास्वादनसमये सहृदया यं विलक्षणं चमत्कारमनुभवन्ति, स एव चमत्कारः सकलविघ्नविनिर्मुक्तसंवित्पदेनाभिहितः[४]। काव्यानुशासनस्य व्याख्याता यं चमत्कारं परिभाषयन् प्राह—अद्भुतभोगात्मस्पन्दावेशरूपो हि चमत्कारः'[५] इति। तदुद्धृतं विश्वनाथेन—'रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते'[६] इत्यादि। अनेनोद्धरणेन प्रतीयते काव्यानन्द एकमलौकिकसंवेदनं यं चमत्कारशब्देन वक्तुं शक्यते।

---

१. महाकविकालिदास, डॉ. रमाशङ्करतिवारी, पृ.३०।

२. काव्यप्रकाशः, द्वितीयोल्लासः, व्याख्या—विश्वेश्वरसिद्धान्तशिरोमणिः, पृ. ३९।

३. लोकोत्तरत्वं चाह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेषः।
(रसगङ्गाधरः, प्रथमाननम्, पृ.११)

४. नाट्यशास्त्रम्, षष्ठाऽध्यायस्यांशभूते अभिनवरससिद्धान्ते, पृ. ३४।

५. काव्यानुशासनम्-२।१;

६. साहित्यदर्पणः, तृतीयपरिच्छेदः।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

रसोऽयं काव्यशास्त्रिभिर्बहुधा व्याख्यात:। प्राय: सर्वैराचार्यै रस आनन्दमय: स्वीकृत:। तत्रादौ—

दु:खार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम्।
विश्रान्तिजननं काले नाट्यमेतन्मया कृतम्[१]।। इति।

नाट्यस्य प्रयोजनं प्रतिपादयता भरतेन प्रोक्तं, यद् रसस्य फलं विश्रान्तिजननमस्ति। तदनन्तरं यद्यपि भामह-दण्डि-भट्टोद्भटवामनादीनां ग्रन्थेषु रसस्य विशिष्टं विवरणं नोपलभ्यते तथापि 'येन माद्यन्ति धीमन्तो मधुनेव मधुव्रता:'[२] इत्यादि-शब्दै रसेनानन्दमग्नता प्रतिपादिता। रुद्रटश्च—'एते रसा: रसवतो रमयन्ति पुंस:'[३] इत्याद्युक्त्या रसस्य मन:प्रसादकर्तृतामङ्गीचकार। 'सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम्'[४] इत्यादिभिरानन्दवर्धनोऽपि रसस्य स्वादरूपतां जुघोष। 'काव्ये रसयिता सर्वो न बोद्धा न नियोगभाक्'[५] इत्युक्त्या रसस्य प्राधान्यं प्रतिपादयन् भट्टनायक:, 'योगिनां समाधौ य आनन्दस्तदपेक्षया रसानन्द उत्कृष्ट:' इति प्रतिपादितवान्[६], अभिनवभारत्यामुद्धृतेन भट्टतौतवचनेन प्रतीयते यत् तन्मतेऽपि रस आह्लादमय:[७]।

रसस्यानन्दरूपताया: प्रबलप्रतिपादक आचार्योऽभिनवगुप्त: स्वकीय-शैवाद्वैतदर्शनानुसारं विवृणोति—

'अस्मन्मते तु संवेदनमेवानन्दघनमास्वाद्यते'[८]। 'सामाजिकानां हि हर्षैकफलं नाट्यम्, न शोकादिफलम्'[९], 'तथापि तत्र प्रीतिरेव प्रधानम्'[१०] इत्याद्युक्त्या रसस्यानन्दात्मकतां निर्भ्रान्तरूपेणोद्घोषितवान्। 'ह्लादनिष्यन्दो रस:' इति प्रतिपादयता महिमभट्टेन रसेन सहृदयानां तथा तृप्तिरुद्भाविता यथा समाधौ योगिनाम्[११]। आनन्दनिष्पत्तिरेव काव्यस्य प्रमुखं प्रयोजनमिति मन्वान: कुन्तकश्च

---

१. नाट्यशास्त्रम्-१।११४; २. काव्यादर्श:-१।५१।
३. काव्यालङ्कार:-१५।२१; ४. ध्वन्यालोक:-१।६।
५. लोचनव्याख्यासहितो ध्वन्यालोक:, व्याख्याकार:-रामसागरत्रिपाठी, पृ.६५।
६. वाग्धेनुर्दुग्धम् एतं हि रसं यद् बालतृष्णया।
तेन नास्य सम: स स्याद् दुह्यते योगिभिर्हि य:।। (तत्रैव प्रथमोद्द्योत:, पृ.१६९)
७. झटित्येव रसा यत्र व्यज्यन्ते ह्लादिभिर्गुणै:।
८. हिन्दी-अभिनवभारती, पृ.५००।
९. तत्रैव।
१०. ध्वन्यालोकलोचनम्, प्रथमोद्द्योत:, पृ.६६।
११. ततो निर्विषयस्यास्य स्वरूपावस्थितौ निज:।
व्यज्यते ह्लादनिष्पन्दो येन तृप्यन्ति योगिन:।। (व्यक्तिविवेक:, प्रथमो विमर्श:)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

'काव्यामृतरसेनान्तश्चमत्कारो वितन्यते' इति व्याहरन् अन्तश्चमत्कृतिमेव परम-प्रयोजनं प्राह[१]। काव्यप्रकाशस्य स्वकृतमङ्गलपद्ये मम्मटाचार्यः कविभारत्याः सर्वातिशायितां प्रतिपादयन् तां ह्लादैकमयीं नवरसरुचिरां चाभिदधानः[२] काव्य-प्रयोजने च सद्यःपरनिर्वृतिमेव सकलप्रयोजनमौलिभूतमिति स्वीचकार। हेमचन्द्रोऽपि आनन्दपदार्थं व्याकुर्वन् सद्योरसास्वादजन्या निरस्तवेद्यान्तरा ब्रह्मास्वादसदृशी प्रीतिरिति व्याचख्यौ। प्राह च तत्रैव—'इदं सर्वप्रयोजनोपनिषद्भूतं कविसहृदययोः काव्यप्रयोजनम्'[३]। अग्निपुराणकारोऽपि सहजानन्दस्याभिव्यक्तिरेव रस इति ब्रूते[४]।

अस्मिन्नेव क्रमे रसात्मवादी विश्वनाथश्च रसस्वरूपं निरूपयन् 'रसः' अखण्डः, चिन्मयः, स्वप्रकाशानन्दः, वेद्यान्तरसम्पर्कशून्यो ब्रह्मास्वादसहो-दरश्चेत्यभिदधे। तथा हि—

सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः॥
लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः[५]॥

पूर्वोक्तानां सर्वेषां रसवैशिष्ट्यानां निरूपणे कृते सति काव्यजन्यानन्दस्य स्वरूपनिर्धारणं सहजतया कर्तुं शक्यते।

रसास्वादनकाले सहृदयानां विलक्षणा मनोदशा भवति। तस्मिन् समये सत्त्वोद्रेको जायते। सत्त्वञ्च रजस्तमोभ्यामस्पृष्टं मन[६] इत्युच्यते, अर्थात् काव्यानुशीलनेन रजस्तमसी स्व-स्वकार्यकरणेऽसमर्थे भवतः। भावोऽयं रजोगुण-प्रादुर्भावे मनसि चाञ्चल्यं तमसि च प्रमादमोहादिप्राबल्यं भवति। परं

---

१. वक्रोक्तिजीवितम्-१।५।
२. नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।
नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति॥ (काव्यप्रकाशः-१।१)
सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलितवेद्यान्तरमानन्दम्।
(तत्रैव, वृत्त्यंशः-१।२)
३. काव्यानुशासनम्-१।३।
४. आनन्दः सहजस्तस्य व्यज्यते स कदाचन।
व्यक्तिः सा तस्य चैतन्यचमत्काररसाह्वया॥ (अग्निपुराणम्-३३९।२)
५. साहित्यदर्पणः-३।२-३।
६. रजस्तमोभ्यामस्पृष्टं मनःसत्त्वमिहोच्यते। (सरस्वतीकण्ठाभरणम्-५।२०)

CC-0. Sampurnanand University Collection. Digitized by eGangotri

काव्यार्थानुसन्धानसमये सहृदयानां मनसिं चाञ्चल्यप्रमादमोहादीनां तिरोधानं भवति, सुखात्मिका च वृत्तिर्भवति। भट्टनायकानुसारं भावकत्वव्यापारेण सहृदयानां मनसि साधारणीकृतिरूपसहृदयतायाः सञ्चारो भवति। तदनन्तरं भोजकत्वव्यापारेण रसो भुज्यते। सहृदयानामयं विचित्रानुभवोऽलौकिकमानसाध्यवसायश्चास्ति। एतस्य स्वरूपविश्लेषणं क्रियते चेत् तदा स सत्त्वोद्रेकप्रकाशानन्दमयनिजसंविद्विश्रान्ति-सलक्षणो भवति[१]।

अयं 'रसः' काव्यानन्दो वा वेद्यान्तरस्पर्शशून्यः, अभिनवगुप्तानुसारं चर्व्यमाणतैकसारोऽस्ति। रसानुभवकाले प्रमातुस्तन्मयीभावावस्था भवति, ययाऽवस्थया प्रमाता स्वपरतटस्थदेशादिभावनाशून्यः सर्वथाऽऽत्मलीनो भवति। अत एव रसो ब्रह्मास्वादसहोदरपदेनाभिहितः। ब्रह्मानन्दः शुद्धचिदानन्दात्मकानुभवो रसानुभवश्च रत्यादिसंवलितचिदानन्दरूप इति विशेषः। यतो हि रसानुभवकाले वेद्यान्तरस्पर्शशून्यता भवति, परं विभावानुभावव्यभिचारिस्थायिभावानामात्मन आनन्दांशस्य च समूहालम्बनात्मकं स्वरूपं रसः। अतो ब्रह्मास्वादसहोदरपदेन रसस्यालौकिकता तेन साधिता।

अयं रसोऽखण्डः। अस्यानुभवकाले विभावानुभावव्यभिचारिणां पृथक् पृथगनुभूतिर्न जायते। परं प्रपाणकरसन्यायेन सर्वेषां मिश्रणेन विलक्षणाऽऽस्वादानु-भूतिर्भवति। अपि च तन्मयीभावादेतेषां मात्राभेदस्तारतम्यं वा नानुभूयते। यदपूर्णं तत्र रसानुभूतिर्न जायते। काव्यानन्दो रसः स्वप्रकाशानन्दचिन्मयश्च वर्तते। इयं साऽऽनन्दमयी चितिर्यस्यामिन्द्रियसाध्यताया अभावः, चैतन्यस्य च सद्भावो वर्तते। अपि च एतस्मिन्नानन्दे प्रमाणान्तरापेक्षा नास्ति। स्वयं प्रकाशत इति स्वप्रकाशः। अयमानन्दात्मको रसो लोकोत्तरचमत्कारप्राणो वर्तते। यतो हि स प्रत्यक्ष-परोक्ष-कार्य-ज्ञाप्य-सविकल्पक-निर्विकल्पक-नित्यानित्यलौकिकसंवित्ति-विनिर्मुक्तत्वादलौकिकः।

रसोऽयमास्वादरूपः, न तु आस्वाद्यः। व्यवहारे 'रस' आस्वाद्यत इति यः प्रयोगो दृश्यते, स ओदनं पचतीतिवद् व्यवहारः।

रसगङ्गाधरे पण्डितराजेन 'रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति' इत्यादिश्रुतिवाक्यमुद्धृत्य प्रोक्तम्—

'वस्तुतस्तु वक्ष्यमाणश्रुतिस्वारस्येन, रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रसः'।

इत्थं रसानुभूतिर्ब्रह्मास्वादसहोदरा विलक्षणाऽऽनन्दमय्यनुभूतिरस्तीति निर्णीतम्।

---

१. नाट्यशास्त्रम्—षष्ठोऽध्यायः, तत्रस्थाऽभिनवभारती, अभिनवरससिद्धान्तः, पृ. २४।

CC-0. Sampurnanand University Collection. Digitized by eGangotri

**निष्कर्षः**

इत्थमानन्दपदार्थानुशीलनेन निष्कर्षतया यत् तथ्यं प्रादुर्भवति तं समाश्रित्य वक्तुं शक्यते यदानन्दो द्विविधः —

१. उदात्तात्मविश्रान्तिरूप आनन्दः, २. आह्लादो मनःप्रीतिर्वा।

इमे उभे अपि रूपे परस्परं संश्लिष्टे। आत्मविश्रान्तिरूपोऽध्यात्मानन्दो वा, ब्रह्मास्वादसहोदरोऽन्तश्चमत्काररूपः काव्यानन्दो वा, आधिभौतिकविषयसुखजन्यो मनोह्लादो वा भवेत्; इमे सर्वे आस्वादमात्रसाराः।

ब्रह्मानन्दे, काव्यानन्दे, भौतिकानन्दे च स एव आत्मानन्दोऽनुभूयते परं वर्तते एषु कश्चन भेदः। तथा हि ब्रह्मानन्दे षट्साधनैः साधकानां शुद्धेऽन्तःकरणे आत्मानन्दः प्रकाशते तदा ब्रह्मानन्दाकाराकारिता चित्तवृत्तिर्भवति। अनन्तरं चित्तस्यापि तस्मिन् लये जाते सति केवलमानन्दमात्रमवशिष्यते। तस्यानन्दस्यानुभवं केवलमानन्दस्वरूप आत्मैव करोति। यथा दर्पणे स्वसौन्दर्यं दृष्ट्वा जनो हृष्यति।

भौतिकानन्देऽपि तस्यैवानन्दस्य प्रकाशो भवति तथापि भौतिकविषयैः संवलितः। विषयसुखेऽप्यभीष्टप्राप्तौ चित्तैकाग्रे जाते सति तत्र आत्मन आनन्दांशः स्फुटो भवति। अतः स एवानन्दो लौकिकविषयसंवलितत्वात् क्षणिकः परिमितश्च।

काव्यानन्दे च लौकिका ये रत्यादीनां कार्यकारणभूताः सन्ति, त एव काव्ये विभावानुभावव्यभिचारिपदव्यपदेश्या भवन्ति। एवञ्चाऽलौकिकविभावादिभिः स्वस्वरूपानन्दात्मविषयकं यदज्ञानावरणं तदपसार्यते। आवरणेऽपसारिते स्वरूपानन्दः प्रकाशते विभावादींश्च विषयीकरोति। अतः सर्व इमे आनन्दमया अनुभूयन्ते। तदा परिमितप्रमातृतापसरति। सर्वविधद्वन्द्वविनिर्युक्तः परिच्छेदातीत-आनन्दोऽनुभूयते। परमयं विभावादिसंवलितत्वाद् ब्रह्मास्वादसहोदर इत्युच्यते।

इत्थमानन्दस्य प्रतिरूपप्रतीतिरात्मविश्रान्तिरात्मनो निर्द्वन्द्वात्मिका स्थितिरेव, एका विलक्षणा इन्द्रियातीतानुभूतिः। आधिभौतिकानन्दस्य प्रभेदेषु इन्द्रियानन्दे रागात्मके बौद्धिकानन्दे च तत्तद्विषयेभ्यः समुद्भूता प्रगाढतल्लीनता, तद्भावभावितचित्तताऽऽनन्दपदार्थोऽस्ति। काव्यानन्दे च सहृदयानां हृदयसंवादिनां विभावादीनां परामर्शाद् या तन्मयावस्था जायते, यस्यामवस्थायां वैयक्तिकाः सांसारिकद्वन्द्वाश्चातीता भवन्ति, तदात्मविश्रान्तिपूर्वको यो रसबोधो भवति, स ब्रह्मास्वादसहोदरः। ब्रह्मास्वादसहोदरभूतायां तस्यामवस्थायां व्यष्टिभावना

CC-0. Sampurnanand University Collection. Digitized by eGangotri

समष्टिभावनामापद्यते, व्यष्टिहृदयं समष्टिहृदयं भवति, व्यष्टिसीमा समष्टिसीमासु पर्यवसिता भवन्ति। तामेव भरतो निजहृदयसंवादपदेन, अभिनवश्च वासनासंवादशब्देन, विश्वनाथश्च सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयशब्देन, पण्डितराजश्च भग्नावरणचिद्विशिष्टरत्यादिरूपेण वस्तुतो रत्याद्यवच्छिन्नचिद्रूपेण व्याजह्रुः।

अध्यात्मक्षेत्रे इयं सा भावमयी भूमिरस्ति, यत्र सर्वे विकारा विगलिता भवन्ति। अहन्ताया इदन्तायां पर्यवसानं भवति, स्वता विलीना भवति, स्वपरयोर्भेदो न प्रतीयते। सर्वे पदार्थाः समरसा भवन्ति। तदानीं ज्ञातृत्वस्य ज्ञानस्य च, ध्यातृत्वस्य ध्यानस्य च विलयो भवति। परिपूर्णस्यात्मानन्दस्यास्वादमात्रमनुभूयत इति।



CC-0. Sampurnanand University Collection. Digitized by eGangotri

पञ्जीकरणसंख्या—६९८१/५७

## सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. **वेदान्तपरिभाषा** : वेदान्तविषयकोऽयं वादग्रन्थः श्रीमद्धर्मराजाध्वरीन्द्रप्रणीतो रामकृष्णाध्वरिकृत'**शिखामणि**'टीकया, स्वामिश्रीमदमरदासप्रणीत'**मणिप्रभा**'टीकया चोपेतः प्रो.पारसनाथद्विवेदिमहोदयस्य टिप्पण्यादिभिः, भूमिकया, अनुसन्धानात्मकपरिशिष्टैश्च सम्भूष्य सम्पाद्य च प्रकाशितः— ४००.००

२. **गाथासप्तशती (गाहासत्तसई)** : ग्रन्थोऽयं हालोपनामकमहाकविश्रीसातवाहनसङ्कलितः, भट्टश्रीमथुरानाथशर्मकृतया प्राकृतगाथासप्तशत्याश्छायारूपया **संस्कृतगाथासप्तशत्या, व्यङ्ग्यसर्वङ्कषाख्यव्याख्यया** च विभूषितः सुसम्पाद्य प्रकाशितः— ४००.००

३. **कातन्त्रव्याकरणम्** : आचार्यशर्ववर्मप्रणीतो व्याकरणशास्त्रस्यापूर्वोऽयं ग्रन्थः श्रीदुर्गसिंहकृताभ्यां **कातन्त्र-वृत्ति-टीकाभ्यां** श्रीमत्त्रिलोचनदासकृतया '**कातन्त्रवृत्तिपञ्जिका**'टीकया कविराजसुषेणशर्मकृतया '**कलापचन्द्र**'-टीकया, अथ च डॉ.जानकीप्रसादद्विवेदिकृतया **समीक्षया**, विवरणात्मिकया भूमिकया, अनुसन्धानात्मक-परिशिष्टैश्च सनाथीकृत्य सुसम्पाद्य प्रकाशितः— प्रथमो भागः ३५०.००
द्वितीयो भागः खण्डम्-१ ५००.००
द्वितीयो भागः खण्डम्-२ ६००.००

४. **सर्वानन्दकरणम्** : ज्योतिषशास्त्रस्य महनीयोऽयं ग्रन्थः पण्डितश्रीगोविन्द-आप्टेमहोदयेन विरचितः स्वोपज्ञव्याख्यया विभूषितश्च सुसम्पाद्य प्रकाशितः— १२०.००

**बृहदारण्यकवार्तिकसारः** : श्रीमद्विद्यारण्यस्वामिविरचितो वेदान्तशास्त्रीयोऽयं ग्रन्थो म.म.पण्डित-श्रीहरिहरकृपालुद्विवेदिविरचितेन हिन्दीभाषानुवादेन समलङ्कृत्य प्रकाशितः—
प्रथमो भागः २५०.००, द्वितीयो भागः २५०.००
तृतीयो भागः २४०.००, चतुर्थो भागः २७०.००

६. **रसगङ्गाधरः** : साहित्यशास्त्रीयोऽयं प्रौढो ग्रन्थः पण्डितराजजगन्नाथप्रणीतः श्रीनागेशभट्टकृतया '**गुरुमर्मप्रकाश**'व्याख्ययोपेतः सुसम्पाद्य प्रकाशितः— प्रथमो भागः १८०.००
द्वितीयो भागः ४८०.००

७. **पाश्चात्त्य-भारतीयराजनीत्योः समालोचनम्** : पण्डितराजश्रीराजेश्वरशास्त्रिव्याख्यानभूतः समालोचनात्मकोऽयं ग्रन्थः सुसम्पाद्य प्रकाशितः— भाग-१ ५००.००
भाग-२ ५५०.००

८. **मानवनीतिविवेचनम्** : प्रो.राधेश्यामधरद्विवेदिमहोदयेन प्रणीतो भारतीयसमाजनीतिमानवनीत्योश्च विश्लेषणात्मकोऽनुसन्धानात्मकोऽयं ग्रन्थः सम्यग्रूपेण सम्पाद्य प्रकाशितः— २८०.००

९. **भास्करी (द्वितीयं संस्करणम्)** : शैवदर्शनस्य महनीयोऽयं ग्रन्थः श्रीमदुत्पलाचार्यप्रणीतया **ईश्वर-प्रत्यभिज्ञाकारिकयोपेतः** श्रीमदाचार्याभिनवगुप्तविरचित'**विमर्शिन्या**'ख्यटीकया विभूषितः, तट्टीकाभूत-**भास्करी**व्याख्यया समलङ्कृत्य सम्पाद्य च प्रकाशितः— प्रथमो भागः १५०.००
द्वितीयो भागः १५०.००
तृतीयो भागः १८०.००

१०. **वर्णाश्रम शिक्षा-व्यवस्था तथा आधुनिक युग में उसकी उपयोगिता** : डॉ.सुभाषचन्द्रतिवारिमहोदयेन विरचितः शिक्षाशास्त्रस्यानुसन्धानात्मको विश्लेषणात्मकोऽयं ग्रन्थः सुसम्पाद्य प्रकाशितः— २००.००

११. **संस्कृतकथाकुञ्जः** : अभिनवकथानिगुम्फनपराणां स्वनामधन्यानां कथाकाराणामेकविंशतिसंख्याकाः कथाः सङ्कलय्य पण्डितश्रीशिवजी-उपाध्यायमहोदयैः, डॉ.शिवदत्तशर्मचतुर्वेदिमहाशयैश्च सम्पादितोऽयं ग्रन्थः प्रकाशितः— १३०.००

१२. **भवभूति की काव्यभाषा का शैली (रीति) वैज्ञानिक अध्ययन** : भाषावैज्ञानिकानुसन्धानात्मकोऽयं ग्रन्थः डॉ.व्रजभूषणत्रिपाठिमहोदयेन विरचितः सुसम्पाद्य प्रकाशितः— २६०.००

***पत्रव्यवहारसङ्केतः*— निदेशकः**, प्रकाशनसंस्थानस्य, सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसी-२२१००२

CC-0. Sampurnanand University Collection. Digitized by eGangotri